पाकाद्द्रवा द्रवीकुर्युः सन्धिस्रोतोमुखान्यपि
स्वेदश्च बाह्यस्रोतःसु विहतस्तिर्यगास्थितः ४१
तदेवोदकमाप्याय्य पिच्छां कुर्यात्तदा भवेत्
गुरूदरं स्थिरं वृत्तमाहतं च न शब्दवत् ४२
मृदु व्यपेतराजीकं नाभ्यां स्पृष्टं च सर्पति
तदनूदकजन्मास्मिन्कुक्षिवृद्धिस्ततोऽधिकम् ४३
सिरान्तर्धानमुदकजठरोक्तं च लक्षणम्
वातपित्तकफप्लीहसन्निपातोदकोदरम् ४४
कृच्छ्रं यथोत्तरम् पक्षात्परं प्रायोऽपरे हतः
सर्वं च जातसलिलं रिष्टोक्तोपद्रवान्वितम् ४५
जन्मनैवोदरं सर्वं प्रायः कृच्छ्रतमं मतम्
बलिनस्तदजाताम्बु यत्नसाध्यं नवोत्थितम् ४६

इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां
तृतीये निदानस्थानेउदरनिदानं नाम द्वादशोऽध्यायः १२

## त्रयोदशोऽध्यायः

अथातः पाण्डुरोगशोफविसर्पनिदानं व्याख्यास्यामः
इति ह स्माहुरात्रेयादयो महर्षयः
पित्तप्रधानाः कुपिता यथोक्तैः कोपनैर्मलाः
तत्रानिलेन बलिना क्षिप्तं पित्तं हृदि स्थितम् १
धमनीर्दश सम्प्राप्य व्याप्नुवत्सकलां तनुम्
श्लेष्मत्वग्रक्तमांसानि प्रदूष्यान्तरमाश्रितम् २
त्वङ्मांसयोस्तत्कुरुते त्वचि वर्णान् पृथग्विधान्
पाण्डुहारिद्रहरितान् पाण्डुत्वं तेषु चाधिकम् ३
यतोऽत पाण्डुरित्युक्तः स रोगः तेन गौरवम्
धातूनां स्याच्च शैथिल्यमोजसश्च गुणक्षयः ४
ततोऽल्परक्तमेदस्को निःसारः स्याच्छ्लथेन्द्रियः
मृद्यमानेरिवाङ्गैर्ना द्रवता हृदयेन च ५
शूनाक्षिकूटः सदनः कोपनः ष्ठीवनोऽल्पवाक्
अन्नद्विट् शिशिरद्वेषी शीर्णरोमा हतानलः ६

सन्नसक्थो ज्वरी श्वासी कर्णक्ष्वेडी भ्रमी श्रमी
स पञ्चधा पृथग्दोषैः समस्तैर्मृत्तिकादनात् ७
प्राग्रूपमस्य हृदयस्पन्दनं रूक्षता त्वचि
अरुचिः पीतमूत्रत्वं स्वेदाभावोऽल्पवह्निता ८
सादः श्रमो अनिलात्तत्र गात्ररुक्तोदकम्पनम्
कृष्णरूक्षारुणसिरानखविरामूत्रनेत्रता ९
शोफानाहास्यवैरस्यविट्शोषाः पार्श्वमूर्धरुक्
पित्ताद्धरितपीताभसिरादित्वं ज्वरस्तमः १०
तृट्स्वेदमूर्च्छाशीतेच्छा दौर्गन्ध्यं कटुवक्त्रता
वर्चोभेदोऽम्लको दाहः कफाच्छुक्लसिरादिता ११
तन्द्रा लवणवक्त्रत्वं रोमहर्षः स्वरक्षयः
कासश्च्छर्दिश्च निचयान्मिश्रलिङ्गोऽतिदुःसहः १२
मृत्कषायाऽनिलं पित्तमूषरा मधुरा कफम्
दूषयित्वा रसादींश्च रौक्ष्याद्भुक्तं विरूक्ष्य च १३
स्रोतांस्यपक्वैवापूर्य कुर्याद्रुद्ध्वा च पूर्ववत्
पाण्डुरोगं ततः शूननाभिपादास्यमेहनः १४
पुरीषं कृमिमन्मूञ्चेद्भिन्नं सासृक्कफं नरः
यः पाण्डुरोगी सेवेत पित्तलं तस्य कामलाम् १५
कोष्ठशाखाश्रयां पित्तं दग्ध्वाऽसृङ्मांसमावहेत्
हारिद्रनेत्रमूत्रत्वङ् नखवक्त्रशकृत्तया १६
दाहाविपाकतृष्णावान् भेकाभो दुर्बलेन्द्रियः
भवेत्पित्तोल्बणस्यासौ पाण्डुरोगादृतेऽपि च १७
उपेक्षया च शोफाढ्या सा कृच्छ्रा कुम्भकामला
हरितश्यावपीतत्वं पाण्डुरोगे यदा भवेत् १८
वातपित्ताद्भ्रमस्तृष्णा स्त्रीष्वहर्षो मृदुर्ज्वरः
तन्द्राबलानलभ्रंशो लोढरं तं हलीमकम् १९
अलसं चेति शंसन्ति तेषां पूर्वमुपद्रवाः
शोफप्रधानाः कथिताः स एवातो निगद्यते २०
इति पाण्डुरोगनिदानम्
अथ शोफनिदानम्

पित्तरक्तकफान्वायुर्दुष्टो दुष्टान् बहिःसिराः
नीत्वा रुद्धगतिस्तैर्हि कुर्यात्त्वङ्मांससंश्रयम् २१
उत्सेधं संहतं शोफं तमाहुर्निचयादतः
सर्वं हेतुविशेषैस्तु रूपभेदान्नवात्मकम् २२
दोषैः पृथग्द्वयैः सर्वैरभिघाताद्विषादपि
द्विधा वा निजमागन्तुं सर्वाङ्गैकाङ्गजं च तम् २३
पृथून्नतग्रथितताविशेषैश्च त्रिधा विदुः
सामान्यहेतुः शोफानां दोषजानां विशेषतः २४
व्याधिकर्मोपवासादिक्षीणस्य भजतो द्रुतम्
अतिमात्रमथान्यस्य गुर्वम्लस्निग्धशीतलम् २५
लवणक्षारतीक्ष्णोष्णशाकाम्बु स्वप्नजागरम्
मृद्ग्राम्यमांसवल्लूरमजीर्णश्रममैथुनम् २६
पदातेर्मार्गगमनं यानेन क्षोभिणाऽपि वा
श्वासकासातिसारार्शोजठर प्रदरज्वराः २७
विषूच्यलसकच्छर्दि गर्भवीसर्पपाण्डवः
अन्ये च मिथ्योपक्रान्तास्तैर्दोषा वक्षसि स्थिताः २८
ऊर्ध्वं शोफमधो बस्तौ मध्ये कुर्वन्ति मध्यगाः
सर्वाङ्गगाः सर्वगतं प्रत्यङ्गेषु तदाश्रयाः २९
तत्पूर्वरूपं दवथुः सिरायामोऽङ्गगौरवम्
वाताच्छोफश्चलो रूक्षः खररोमाऽरुणासितः ३०
सङ्कोचस्पन्दहर्षार्तितोद मेदप्रसुप्तिमान्
क्षिप्रोत्थानशमः शीघ्रमुन्नमेत्पीडितस्तनुः ३१
स्निग्धोष्णमर्दनैः शाम्येद्रात्रावल्पो दिवा महान्
त्वक् च सर्षपलिप्तेव तस्मिंश्चिमिचिमायते ३२
पीतरक्तासिताभासः पित्तादाताम्ररोमकृत्
शीघ्रानुसारप्रशमो मध्ये प्राग्जायते तनुः ३३
सतृड्दाहज्वर स्वेददवक्लेदमदभ्रमः
शीताभिलाषी विड्भेदी गन्धी स्पर्शासहो मृदुः ३४
कण्डूमान् पाण्डुरोमत्वक्कठिनः शीतलो गुरुः
स्निग्धः श्लक्ष्णः स्थिरःस्त्यानो निद्राच्छर्द्यग्निसादकृत् ३५

अक्रान्तो नोन्नमेत्कृच्छ्रशमजन्मा निशाबलः
स्रवेन्नासृक् चिरात्पिच्छां कुशशस्त्रादिविक्षतः ३६
स्पर्शोष्णकाङ्क्षी च कफात् यथास्वं द्वन्द्वजास्त्रयः
सङ्कराद्धेतुलिङ्गानाम् निचयान्निचयात्मकः ३७
अभिघातेन शस्त्रादिच्छेदभेदक्षतादिभिः
हिमानिलोदध्यनिलैर्भल्ला तकपिकच्छुजैः ३८
रसैः शूकैश्च संस्पर्शाच्छ्वयथुः स्याद्विसर्पवान्
भृशोष्मा लोहिताभासः प्रायशः पित्तलक्षणः ३९
विषजः सविषप्राणिपरिसर्पणमूत्रणात्
दंष्ट्रादन्तनखापाता दविषप्राणिनामपि ४०
विण्मूत्रशुक्रोपहतमलवद्वस्त्र सङ्करात्
विषवृक्षानिलस्पर्शाद्गरयोगा वचूर्णनात् ४१
मृदुश्चलोऽवलम्बी च शीघ्रो दाहरुजाकरः
नवोऽनुपद्रवः शोफःसाध्योऽसाध्यःपुरेरितः ४२
इति शोफनिदानम्
अथ विसर्पनिदानम्
स्याद्विसर्पोऽभिघातान्तैदोषैर्दूष्यैश्च शोफवत्
त्र्यधिष्ठानं च तं प्राहुर्बाह्यान्तरुभयाश्रयात् ४३
यथोत्तरं च दुःसाध्याः तत्र दोषा यथायथम्
प्रकोपणैः प्रकुपिता विशेषेण विदाहिभिः ४४
देहे शीघ्रं विसर्पन्ति तेऽन्तरन्तःस्थिता बहिः
बहिःस्था द्वितये द्विस्थाः विद्यात्तत्रान्तराश्रयम् ४५
मर्मोपतापात्सम्मोहादयनानां विघट्टनात्
तृष्णातियोगाद्वेगानां विषमं च प्रवर्तनात् ४६
आशु चाग्निबलभ्रंशादतो बाह्यं विपर्ययात्
तत्र वातात्परीसर्पो वातज्वरसमव्यथः ४७
शोफस्फुरणनिस्तोद मेदायामार्तिहर्षवान्
पित्ताद्द्रुतगतिः पित्तज्वरलिङ्गोऽतिलोहितः ४८
कफात्कण्डूयुतः स्निग्धः कफज्वरसमानरुक्
स्वदोषलिङ्गैश्चीयन्ते सर्वे स्फोटैरुपेक्षिताः ४९

ते पक्वभिन्नाः स्वं स्वं च बिभ्रति व्रणलक्षणम्
वातपित्ताज्ज्वरच्छर्दि मूर्च्छातीसारतृड्भ्रमैः ५०
अस्थिभेदाग्नि सदनतमका रोचकैर्युतः
करोति सर्वमङ्गं च दीप्ताङ्गारावकीर्णवत् ५१
यं यं देशं विसर्पश्च विसर्पति भवेत्स सः
शान्ताङ्गारासितो नीलो रक्तो वाऽशु च चीयते ५२
अग्निदग्ध इव स्फोटैः शीघ्रगत्वाद् द्रुतं च सः
मर्मानुसारी वीसर्पः स्याद्वातोऽतिबलस्ततः ५३
व्यथेताङ्गं हरेत्संज्ञां निद्रां च श्वासमीरयेत्
हिध्मां च स गतोऽवस्थामीदृशीं लभते न ना ५४
क्वचिच्छर्मारतिग्रस्तो भूमिशय्यासनादिषु
चेष्टमानस्ततः क्लिष्टो मनोदेहश्रमोद्भवाम् ५५
दुष्प्रबोधोऽश्नुते निद्रां सोऽग्निवीसर्प उच्यते
कफेन रुद्धः पवनो भित्त्वा तं बहुधा कफम् ५६
रक्तं वा वृद्धरक्तस्य त्वक्सिरास्नावमांसगम्
दूषयित्वा च दीर्घाणुवृत्तस्थूलखरात्मनाम् ५७
ग्रन्थीनां कुरुते मालां रक्तानां तीव्ररुग्ज्वराम्
श्वासकासातिसारास्य शोषहिध्मावमिभ्रमैः ५८
मोहवैवर्ण्यमूर्च्छाङ्गभङ्गाग्नि सदनैर्युताम्
इत्ययं ग्रन्थिवीसर्पः कफमारुतकोपजः ५९
कफपित्ताज्ज्वरः स्तम्भो निद्रातन्द्राशिरोरुजः
अङ्गावसादविक्षेप प्रलापारोचकभ्रमाः ६०
मूर्च्छाग्निहानिर्भेदोऽस्था पिपासेन्द्रियगौरवम्
आमोपवेशनं लेपः स्रोतसां स च सर्पति ६१
प्रायेणामाशये गृह्णन्नेकदेशं न चातिरुक्
पिटकैरवकीर्णोऽतिपीत लोहितपाण्डुरैः ६२
मेचकाभोऽसितः स्निग्धो मलिनः शोफवान् गुरुः
गम्भीरपाकः प्राज्योष्मा स्पृष्टः क्लिन्नोऽवदीर्यते ६३
पङ्कवच्छीर्णमांसश्च स्पष्टस्नायुसिरागणः
शवगन्धिश्च वीसर्पं कर्दमाख्यमुशन्ति तम् ६४

सर्वजो लक्षणैः सर्वैः सर्वधात्वतिसर्पणः
बाह्यहेतोः क्षतात्क्रुद्धः सरक्तं पित्तमीरयन् ६५
विसर्पं मारुतः कुर्यात् कुलत्थसदृशैश्चितम्
स्फोटैः शोफज्वररुजादाहाढ्यं श्यावलोहितम् ६६
पृथग्दोषैस्त्रयः साध्या द्वन्द्वजाश्चानुपद्रवाः
असाध्यौ क्षतसर्वोत्थौ सर्वे चाक्रान्तमर्मकाः ६७
शीर्णस्नायुसिरामांसाः प्रक्लिन्नाः शवगन्धयः६७॥१ध२ इति विसर्पनिदानम्
इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां तृतीये निदानस्थाने पाण्डुरोगशोफविसर्पनिदानंनाम त्रयोदशोऽध्यायः १३

## चतुर्दशोऽध्यायः

अथातः कुष्ठश्वित्रकृमिनिदानं व्याख्यास्यामः
इति ह स्माहुरात्रेयादयो महर्षयः
मिथ्याहारविहारेण विशेषेण विरोधिना
साधुनिन्दावधान्यस्वहरणाद्यैश्च सेवितैः १
पाप्मभिः कर्मभिः सद्यः प्राक्तनैर्वेरिता मलाः
सिराः प्रपद्य तिर्यग्गास्त्वग्लसीकासृगामिषम् २
दूषयन्ति श्लथीकृत्य निश्चरन्तस्ततो बहिः
त्वचः कुर्वन्ति वैवर्ण्यं दुष्टाः कुष्ठमुशन्ति तत् ३
कालेनोपेक्षितं यस्मात्सर्वं कुष्णाति तद्वपुः
प्रपद्य धातून्व्याप्यान्तः सर्वान् संक्लेद्य चावहेत् ४
सस्वेदक्लेदसङ्कोथान् कृमीन् सूक्ष्मान् सुदारुणान्
लोमत्वक्स्नायुधमनीतरुणास्थीनि यैः क्रमात् ५
भक्षयेच्छिवत्रमस्माच्च कुष्ठवाह्यमुदाहृतम्
कुष्ठानि सप्तधा दोषैः पृथङ्मिश्रैः समागतैः ६
सर्वेष्वपि त्रिदोषेषु व्यपदेशोऽधिकत्वतः
वातेन कुष्ठं कापालं पित्तादौदुम्बरंकफात् ७
मण्डलाख्यं विचर्चीं च ऋक्षाख्यं वातपित्तजम्
चर्मैककुष्ठकिटिभसिध्माल सविपादिकाः ८
वातश्लेष्मोद्भवाः श्लेष्मपित्ताद्दद्रुशतारुषी

पुण्डरीकं सविस्फोटं पामा चर्मदलं तथा ९
सर्वैः स्यात्काकणं पूर्वं त्रिकं दद्रु सकाकणम्
पुण्डरीकर्क्षजिह्वे च महाकुष्ठानि सप्त तु १०
अतिश्लक्ष्णखर स्पर्शखेदास्वेदविवर्णताः
दाहः कण्डूस्त्वचि स्वापस्तोदः कोठोन्नतिः श्रमः ११
व्रणानामधिकं शूलं शीघ्रोत्पत्तिश्चिरस्थितिः
रूढानामपि रूक्षत्वं निमित्तेऽल्पेऽपि कोपनम् १२
रोमहर्षोऽसृजः कार्ष्ण्यं कुष्ठलक्षणमग्रजम्
कृष्णारुणकपालाभं रूक्षं सुप्तं खरं तनु १३
विस्तृतासमपर्यन्तं हृषितैर्लोमभिश्चितम्
तोदाढ्यमल्पकण्डूकं कापालं शीघ्रसर्पि च १४
पक्वोदुम्बरताम्रत्वग्रोम गौरसिराचितम्
बहलं बहलक्लेदरक्तं दाहरुजाधिकम् १५
आशूत्थानावदरणकृमि विद्यादुदुम्बरम्
स्थिरं स्त्यानं गुरु स्निग्धं श्वेतरक्तमनाशुगम् १६
अन्योन्यसक्तमुत्सन्नं बहुकण्डूस्त्रुतिक्रिमि
श्लक्ष्णपीताभपर्यन्तं मण्डलं परिमण्डलम् १७
सकण्डूपिटिका श्यावा लसीकाढ्या विचर्चिका
परुषं तनु रक्तान्तमन्तःश्यावं समुन्नतम् १८
सतोददाहरुक्क्लेदं कर्कशैः पिटिकैश्चितम्
ऋक्षजिह्वाकृति प्रोक्तमृक्षजिह्वं बहुक्रिमि १९
हस्तिचर्मखरस्पर्शं चर्म एकाख्यं महाश्रयम्
अस्वेदं मत्स्यशकलसन्निभम् किटिभं पुनः २०
रूक्षं किणखरस्पर्शं कण्डूमत्परुषासितम्
सिध्मं रूक्षं बहिः स्निग्धमन्तघृष्टं रजः किरेत् २१
श्लक्ष्णस्पर्शं तनु श्वेतताम्रं दौग्धिकपुष्पवत्
प्रायेण चोर्ध्वकाये स्यात् गण्डैः कण्डूयुतश्चितम् २२
रक्तैरलसकम् पाणिपाददार्यो विपादिकाः
तीव्रार्त्यो मन्दकण्ड्वश्च सरागपिटिकाचिताः २३
दीर्घप्रताना दूर्वावदतसीकुसुमच्छविः

उत्सन्नमण्डला दद्रूः कण्डूमत्यनुषङ्गिणी २४
स्थूलमूलं सदाहार्ति रक्तश्यावं बहुव्रणम्
शतारुः क्लेदजन्त्वाढ्यं प्रायशः पर्वजन्म च २५
रक्तान्तमन्तरा पाण्डु कण्डूदाहरुजान्वितम्
सोत्सेधमाचितं रक्तैः पद्मपत्रमिवांशुभिः २६
घनभूरिलसीकासृक्प्रायमाशु विभेदि च
पुण्डरीकम् तनुत्वग्भिश्चितं स्फोटैः सितारुणैः २७
विस्फोटम् पिटिकाः पामा कण्डूक्लेदरुजाधिकाः
सूक्ष्माः श्यावारुणा बह्व्यः प्रायः स्फिक्पाणिकूर्परे २८
सस्फोटमस्पर्शसहं कण्डूषातोददाहवत्
रक्तं दलच्चर्मदलम् काकणं तीव्रदाहरुक् २९
पूर्वं रक्तं च कृष्णं च काकणन्तीफलोपमम्
कूष्ठलिङ्गैर्युतं सर्वैर्नैकवर्णं ततो भवेत् ३०
दोषभेदीयविहितैरादिशेल्लिङ्ग कर्मभिः
कुष्ठेषु दोषोल्बणताम् सर्वदोषोल्बणं त्यजेत् ३१
रिष्टोक्तं यच्च यच्चास्थिमज्जशुक्रसमाश्रयम्
याप्यं मेदोगतम् कृच्छ्रं पित्तद्वन्द्वास्त्रमांसगम् ३२
अकृच्छ्रं कफवाताढ्यं त्वक्स्थमेकमलं च यत्
तत्र त्वचि स्थिते कुष्ठे तोदवैवर्ण्यरूक्षताः ३३
स्वेदस्वापश्वयथवः शोणितेपिशिते पुनः
पाणिपादाश्रिताः स्फोटाःक्लेदः सन्धिषु चाधिकम् ३४
कौण्यं गतिक्षयोऽङ्गानां दलनं स्याच्च मेदसि
नासाभङ्गोऽस्थिमज्जस्थे नेत्ररागः स्वरक्षयः ३५
क्षते च कृमयः शुक्रे स्वदारापत्यबाधनम्
यथापूर्वं च सर्वाणि स्युर्लिङ्गान्यसृगादिषु ३६
इति कुष्ठनिदानम्
अथ श्वित्रनिदानम्
कुष्ठैकसम्भवं श्वित्रं किलासं दारुणं च तत्
निर्दिष्टमपरिस्त्रावि त्रिधातूद्भवसंश्रयम् ३७
वाताद्रूक्षारुणं पित्तात्ताम्रं कमलपत्रवत्

सदाहं रोमविध्वंसि कफाच्छ्वेतं घनं गुरु ३८
सकराडु च क्रमाद्रक्तमांसमेदःसु चादिशेत्
वर्णैनैवदृगुभयं कृच्छ्रं तच्चोत्तरोत्तरम् ३९
अशुक्लरोमाबहलमसंसृष्टं मिथो नवम्
अनग्निदग्धजं साध्यं श्वित्रं वर्ज्यमतोऽन्यथा ४०
गुह्यपाणितलौष्ठेषु जातमप्यचिरन्तनम्
स्पर्शैकाहारशय्यादिसेवनात् प्रायशो गदाः ४१
सर्वे सञ्चारिणो नेत्रत्वग्विकारा विशेषतः
इति श्वित्रनिदानम्
अथ कृमिनिदानम्
कृमयस्तु द्विधा प्रोक्ता बाह्याभ्यन्तरभेदतः ४२
बहिर्मलकफासृग्विड्जन्म मेदाच्चतुर्विधाः
नामतो विंशतिविधाः बाह्यास्तत्रामृजोद्भवाः ४३
तिलप्रमाणसंस्थानवर्णाः केशाम्बराश्रयाः
बहुपादाश्च सूक्ष्माश्च यूका लिक्षाश्च नामतः ४४
द्विधा ते कोठपिटिकाकराडूगराडान् प्रकुर्वते
कुष्ठैकहेतवोऽन्तर्जाः श्लेष्मजास्तेषु चाधिकम् ४५
मधुरान्नगुडक्षीरदधि सक्तुनवौदनैः
शकृज्जा बहुविड्धान्यपर्णशाकोलकादिभिः ४६
कफादामाशये जाता वृद्धाः सर्पन्ति सर्वतः
पृथुब्रध्ननिभाः केचित् केचिद्गराडूपदोपमाः ४७
रूढधान्याङ्कुराकारास्तनु दीर्घास्तथाऽणवः
श्वेतास्ताम्रावभासाश्च नामतः सप्तधा तु ते ४८
अन्त्रादा उदरावेष्टा हृदयादा महाकुहाः
कुरवो दर्भकुसुमाः सुगन्धास्ते च कुर्वते ४९
हृल्लासमास्यस्रवण मविपाकमरोचकम्
मूर्च्छाच्छर्दिज्वरानाहकार्श्यक्षवथुपीनसान् ५०
रक्तवाहिसिरोत्थाना रक्तजा जन्तवोऽणवः
अपादा वृत्तताम्राश्च सौक्ष्म्यात्केचिददर्शनाः ५१
केशादा लोमविध्वंसा लोमद्वीपा उदुम्बराः

षट् ते कुष्ठैककर्माणः सहसौरसमातरः ५२
पक्वाशये पुरीषोत्था जायन्तेऽधोविसर्पिणः
वृद्धाः सन्तो भवेयुश्च ते यदाऽमाशयोन्मुखाः ५३
तदाऽस्योद्गारनिःश्वासा विड्गन्धानुविधायिनः
पृथुवृत्ततनुस्थूलाः श्यावपीतसितासिताः ५४
ते पञ्च नाम्ना कृमयः ककेरुकमकेरुकाः
सौसुरादाः सुलूनाख्या लेलिहा जनयन्ति च ५५
विड्भेदशूलविष्टम्भ कार्श्यपारुष्यपाण्डुताः
रोमहर्षाग्निसदनगुद कण्डूर्विनिर्गमात् ५६
इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां तृतीये निदानस्थाने कुष्ठश्वित्रकृमिनिदानं नाम चतुर्दशोऽध्यायः १४

## पञ्चदशोऽध्यायः

अथातो वातव्याधिनिदानं व्याख्यास्यामः
इति ह स्माहुरात्रेयादयो महर्षयः
सर्वार्थानर्थकरणे विश्वस्यास्यैककारणम्
अदुष्टदुष्टः पवनः शरीरस्य विशेषतः १
स विश्वकर्मा विश्वात्मा विश्वरूपः प्रजापतिः
स्रष्टा धाता विभुर्विष्णुः संहर्ता मृत्युरन्तकः २
तददुष्टौ प्रयत्नेन यतितव्यमतः सदा
तस्योक्तं दोषविज्ञाने कर्म प्राकृतवैकृतम् ३
समासाद्व्यासतो दोषभेदीये नाम धाम च
प्रत्येकं पञ्चधा चारो व्यापारश्च इह वैकृतम् ४
तस्योच्यते विभागेन सनिदानं सलक्षणम्
अिसङ्ख्यमपि सङ्ख्याय यदशीत्या पुरेरितम्
धातुक्षयकरैर्वायुः कुप्यत्यतिनिषेवितैः ५
चरन् स्रोतःसु रिक्तेषु भृशं तान्येव पूरयन्
तेभ्योऽन्यदोषपूर्णेभ्यः प्राप्य वाऽवरणं बली ६
तत्र पक्वाशये क्रुद्धः शूलानाहान्त्रकूजनम्
मलरोधाश्मवर्ध्मार्शस्त्रिक पृष्ठकटीग्रहम् ७

करोत्यधरकाये च तांस्तान् कृच्छ्रानुपद्रवान्
आमाशये तृड्वमथुश्वासकासविसूचिकाः ८
कण्ठोपरोधमुद्गारान् व्याधीनूर्ध्वं च नाभितः
श्रोत्रादिष्विन्द्रियवधं त्वचि स्फुटनरूक्षते ९
रक्ते तीव्रा रुजः स्वापं तापं रागं विवर्णताम्
अरूंष्यन्नस्य विष्टम्भमरुचिं कृशतां भ्रमम् १०
मांसमेदोगतो ग्रन्थींस्तोदाढ्यान् कर्कशान् श्रमम्
गुर्वङ्गं चातिरुक्स्तब्धं मुष्टिदण्डहतोपमम् ११
अस्थिस्थः सक्थिसन्ध्यस्थिशूलं तीव्रं बलक्षयम्
मज्जस्थोऽस्थिषु सौषिर्यमस्वप्नं सन्ततां रुजम् १२
शुक्रस्य शीघ्रमुत्सर्गं सङ्गं विकृतिमेव वा
तद्वद्गर्भस्य शुक्रस्थः सिरास्वाध्मानरिक्तते १३
तत्स्थः स्नावस्थितः कुर्याद्गृध्रस्यायामकुब्जताः
वातपूर्णदृतिस्पर्शं शोफं सन्धिगतोऽनिलः १४
प्रसारणाकुञ्चनयोः प्रवृत्तिं च सवेदनाम्
सर्वाङ्गसंश्रयस्तोदभेद स्फुरणभञ्जनम् १५
स्तम्भनाक्षेपणस्वाप सन्ध्याकुञ्चनकम्पनम्
यदा तु धमनीः सर्वाः क्रुद्धोऽभ्येति मुहुर्मुहुः १६
तदाऽङ्गमाक्षिपत्येष व्याधिराक्षेपकः स्मृतः
अधः प्रतिहतो वायुर्व्रजन्नूर्ध्वं हृदाश्रिताः १७
नाडीः प्रविश्य हृदयं शिरः शङ्खौ च पीडयन्
आक्षिपेत्परितो गात्रं धनुर्वच्चास्य नामयेत् १८
कृच्छ्रादुच्छ्वसिति स्तब्धस्त्रस्तमीलितदृक्ततः
कपोत इव कूजेच्च निःसंज्ञः सोऽपतन्त्रकः १९
स एव चापतानाख्यो मुक्ते तु मरुता हृदि
अश्नुवीत मुहुः स्वास्थ्यं मुहुरस्वास्थ्यमावृते २०
गर्भपातसमुत्पन्नः शोणितातिस्रवोत्थितः
अभिघातसमुत्थश्च दुश्चिकित्स्यतमो हि सः २१
मन्ये संस्तभ्य वातोऽन्तरायच्छन् धमनीर्यदा
व्याप्नोति सकलं देहं जत्रुरायम्यते तदा २२

अन्तर्धनुरिवाङ्गं च वेगैः स्तम्भं च नेत्रयोः
करोति जृम्भां दशनं दशनानां कफोद्गमम् २३
पार्श्वयोर्वेदनां वाक्यहनुपृष्ठशिरोग्रहम्
अन्तरायाम इत्येष बाह्यायामश्च तद्विधः २४
देहस्य बहिरायामात् पृष्ठतो नीयते शिरः
उरश्चोत्क्षिप्यते तत्र कन्धरा चावमृद्यते २५
दन्तेष्वास्ये च वैवर्ण्यं प्रस्वेदः स्रस्तगात्रता
बाह्यायामं धनुष्कम्भं ब्रुवते वेगिनं च तम् २६
व्रणं मर्माश्रितं प्राप्य समीरणसमीरणात्
व्यायच्छन्ति तनुं दोषाः सर्वामापादमस्तकम् २७
तृष्यतः पाण्डुगात्रस्य व्रणायामः स वर्जितः
गते वेगे भवेत्स्वास्थ्यं सर्वेष्वाक्षेपकेषु च २८
जिह्वातिलेखनाच्छुष्क भक्षणादभिघाततः
कुपितो हनुमूलस्थः स्रंसयित्वाऽनिलो हनू २९
करोति विवृतास्यत्वमथवा संवृतास्यताम्
हनुस्रंसः स तेन स्यात्कृच्छ्राच्चर्वणभाषणम् ३०
वाग्वाहिनीसिरासंस्थो जिह्वां स्तम्भयतेऽनिलः
जिह्वास्तम्भः स तेनान्नपानवाक्येष्वनीशता ३१
शिरसा भारहरणादतिहास्यप्रभाषणात्
उत्त्रासवक्त्रक्षवथोः खरकार्मुककर्षणात् ३२
विषमादुपधानाच्च कठिनानां च चर्वणात्
वायुर्विवृद्धस्तैस्तैश्च वातलैरूर्ध्वमास्थितः ३३
बक्रीकरोति वक्त्रार्धमुक्तं हसितमीक्षितम्
ततोऽस्य कम्पते मूर्द्धा वाक्सङ्गः स्तब्धनेत्रता ३४
दन्तचालः स्वरभ्रंशः श्रुतिहानिः क्षवग्रहः
गन्धाज्ञानं स्मृतेर्मोहस्त्रासः सुप्तस्य जायते ३५
निष्ठीवः पार्श्वतो यायादेकस्याक्ष्णो निमीलनम्
जत्रोरूर्ध्वं रुजा तीव्रा शरीरार्धेऽधरेऽपि वा ३६
तमाहुरर्दितं केचिदेकायाममथापरे
रक्तमाश्रित्य पवनः कुर्यान्मूर्द्धधराः सिराः ३७

रूक्षाः सवेदनाः कृष्णाःसोऽसाध्यः स्यात्सिराग्रहः
गृहीत्वाऽधतनोर्वायुः सिराः स्नायूर्विशोष्य च ३८
पक्षमन्यन्तरं हन्ति सन्धिबन्धान् विमोक्षयन्
कृत्स्नोऽधकायस्तस्य स्यादकर्मण्यो विचेतनः ३९
एकाङ्गरोगं तं केचिदन्ये पक्षवधं विदुः
सर्वाङ्गरोगं तद्वच्च सर्वकायाश्रितेऽनिले ४०
शुद्धवातहतः पक्षः कृच्छ्रसाध्यतमो मतः
कृच्छ्रस्त्वन्येन संसृष्टो विवर्ज्यः क्षयहेतुकः ४१
आमबद्धायनः कुर्यात्संस्तभ्याङ्गं कफान्वितः
असाध्यं हतसर्वेहं दण्डवद्दण्डकं मरुत् ४२
अंसमूलस्थितो वायुः सिराः सङ्कोच्य तत्रगाः
बाहुप्रस्पन्दितहरं जनयत्यवबाहुकम् ४३
तलं प्रत्यङ्गुलीनां या कण्डरा बाहुपृष्ठतः
बाहुचेष्टापहरणी विश्वाची नाम सा स्मृता ४४
वायुः कट्यां स्थितः सक्थ्नः कण्डरामाक्षिपेद्यदा
तदा खञ्जो भवेज्जन्तुः पङ्गुः सक्थ्नोर्द्वयोरपि ४५
कम्पते गमनारम्भे खञ्जन्निव च याति यः
कलायखञ्जं तं विद्यान्मुक्तसन्धिप्रबन्धनम् ४६
शीतोष्णद्रव संशुष्कगुरुस्निग्धैर्निषेवितैः
जीर्णाजीर्णे तथाऽयाससङ्क्षोभस्वप्नजागरैः ४७
सश्लेष्ममेदःपवनमाम मत्यर्थसञ्चितम्
अभिभूयेतरं दोषमूरू चेत्प्रतिपद्यते ४८
सक्थ्यस्थीनि प्रपूर्यान्तः श्लेष्मणा स्तिमितेनतत्
तदा स्कभ्नाति तेनोरू स्तब्धौ शीतावचेतनौ ४९
परकीयाविव गुरू स्यातामतिभृशव्यथौ
ध्यानाङ्गमर्दस्तैमित्य तन्द्राच्छर्द्यरुचिज्वरैः ५०
संयुतौ पादसदन कृच्छ्रोद्धरणसुप्तिभिः
तमूरुस्तम्भमित्याहुराढ्य वातमथापरे ५१
वातशोणितजः शोफो जानुमध्ये महारुजः
ज्ञेयः क्रोष्टुकशीर्षश्च स्थूलः क्रोष्टुकशीर्षवत् ५२

रुक् पादे विषमन्यस्ते श्रमाद्वा जायते यदा
वातेन गुल्फमाश्रित्य तमाहुर्वातकराटकम् ५३
पार्ष्णिं प्रत्यङ्गुलीनां या कराडरा मारुतार्दिता
सक्थ्युत्क्षेपं निगृह्णाति गृध्रसीं तां प्रचक्षते ५४
विश्वाची गृध्रसी चोक्ता खल्ली तीव्ररुजान्विते
हृष्येते चरणौ यस्य भवेतां च प्रसुप्तवत् ५५
पादहर्षः स विज्ञेयः कफमारुतकोपजः
पादयोः कुरुते दाहं पित्तासृक्सहितोऽनिलः ५६
विशेषतश्चङ्क्रमिते पाददाहं तमादिशेत् ५६-२
इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां
तृतीये निदानस्थाने वातव्याधिनिदानं नाम पञ्चदशोऽध्यायः १५

षोडशोऽध्यायः

अथातो वातशोणितनिदानं व्याख्यास्यामः
इति ह स्माहुरात्रेयादयो महर्षयः
विदाह्यन्नं विरुद्धं च तत्तच्चासृक्प्रदूषणम्
भजतां विधिहीनं च स्वप्नजागरमैथुनम् १
प्रायेण सुकुमाराणामचङ्क्रमणशीलिनाम्
अभिघातादशुद्धेश्च नृणामसृजि दूषिते २
वातलैः शीतलैर्वायुर्वृद्धः क्रुद्धो विमार्गगः
तादृशैवासृजा रुद्धः प्राक्तदेव प्रदूषयेत् ३
आढ्यरोगं खुडं वातबलासं वातशोणितम्
तदाहुर्नामभिः तच्च पूर्वं पादौ प्रधावति ४
विशेषाद्यानयानाद्यैः प्रलम्बौ तस्य लक्षणम्
भविष्यतः कुष्ठसमं तथा सादः श्लथाङ्गता ५
जानुजङ्घोरुकट्यंस हस्तपादाङ्गसन्धिषु
कराडूस्फुरणनिस्तोदभेद गौरवसुप्तताः ६
भूत्वा भूत्वा प्रणश्यन्ति मुहुराविर्भवन्ति च
पादयोर्मूलमास्थाय कदाचिद्धस्तयोरपि ७
आखोरिव विषं क्रुद्धं कृत्स्नं देहं विधावति

त्वङ्मांसाश्रयमुत्तानं तत्पूर्वं जायते ततः ८
कालान्तरेण गम्भीरं सर्वान् धातूनभिद्रवत्
कण्ड्वादिसंयुतोत्ताने त्वक्ताम्रा श्यावलोहिता ९
सायामा भृशदाहोषा गम्भीरेऽधिकपूर्वरुक्
श्वयथुर्ग्रथितः पाकी वायुः सन्ध्यस्थिमज्जसु १०
छिन्दन्निव चरत्यन्तर्वक्रीकुर्वंश्च वेगवान्
करोति खञ्जं पङ्गुं वा शरीरे सर्वतश्चरन् ११
वातेऽधिकेऽधिकं तत्र शूलस्फुरणतोदनम्
शोफस्य रौक्ष्यकृष्णत्वश्यावतावृद्धिहानयः १२
धमन्यङ्गुलिसन्धीनां सङ्कोचोऽङ्गग्रहोऽतिरुक्
शीतद्वेषानुपशयौ स्तम्भवेपथुसुप्तयः १३
रक्ते शोफोऽतिरुक्तोदस्ताम्रश्चिमिचिमायते
स्निग्धरूक्षैः शमं नैति कण्डूक्लेदसमन्वितः १४
पित्ते विदाहः सम्मोहः स्वेदो मूर्च्छा मदः सतृट्
स्पर्शाक्षमत्वं रुग्रागः शोफः पाको भृशोष्मता १५
कफे स्तैमित्यगुरुतासुप्तिस्निग्धत्वशीतताः
कण्डूर्मन्दा च रुक् द्वन्द्वसर्वलिङ्गं च सङ्करे १६
एकदोषानुगं साध्यं नवं याप्यं द्विदोषजम्
त्रिदोषजं त्यजेत्स्रावि स्तब्धमर्बुदकारि च १७
रक्तमार्गं निहत्याशु शाखासन्धिषु मारुतः
निविश्यान्योन्यमावार्य वेदनाभिर्हरत्यसून् १८
वायौ पञ्चात्मके प्राणो रौक्ष्यव्यायामलङ्घनैः
अत्याहाराभिघाताध्ववेगोदीरणधारणैः १९
कुपितश्चक्षुरादीनामुपघातं प्रवर्तयेत्
पीनसार्दिततृट्कासश्वासादींश्चामयान्बहून् २०
उदानः क्षवथूद्गारच्छर्दिनिद्राविधारणैः
गुरुभारातिरुदितहास्याद्यैर्विकृतो गदान् २१
कण्ठरोधमनोभ्रंशच्छर्द्यरोचकपीनसान्
कुर्याच्च गलगण्डादींस्तांस्तान् जत्रूर्ध्वसंश्रयान् २२
व्यानोऽतिगमनध्यानक्रीडाविषमचेष्टितैः

विरोधिरूक्षभीहर्ष विषादाद्यैश्च दूषितः २३
पुंस्त्वोत्साहबलभ्रंशशोफ चित्तोत्प्लवज्वरान्
सर्वाङ्गरोगनिस्तोद रोमहर्षाङ्गसुप्तताः २४
कुष्ठं विसर्पमन्यांश्च कुर्यात्सर्वाङ्गगान् गदान्
समानो विषमाजीर्णशीतसङ्कीर्णभोजनैः २५
करोत्यकालशयनजागराद्यैश्च दूषितः
शूलगुल्मग्रहण्यादीन् पक्वामाशयजान् गदान् २६
अपानो रूक्षगुर्वन्न वेगाघातातिवाहनैः
यानयानासनस्थान चङ्क्रमैश्चातिसेवितैः २७
कुपितः कुरुते रोगान् कृच्छ्रान् पक्वाशयाश्रयान्
मूत्रशुक्रप्रदोषार्शोगुदभ्रंशादिकान् बहून् २८
सर्वं च मारुतं सामं तन्द्रास्तैमित्यगौरवैः
स्निग्धत्वारोचकालस्यशैत्य शोफाग्निहानिभिः २९
कटुरूक्षाभिलाषेण तद्विधोपशयेन च
युक्तं विद्यान्निरामं तु तन्द्रादीनां विपर्ययात् ३०
वायोरावरणं चातो बहुभेदं प्रवक्ष्यते
लिङ्गं पित्तावृत्ते दाहस्तृष्णा शूलं भ्रमस्तमः ३१
कटुकोष्णाम्ललवणैर्विदाहः शीतकामता
शैत्यगौरवशूलानि कट्वाद्युपशयोऽधिकम् ३२
लङ्घनायासरूक्षोष्णकामता च कफावृते
रक्तावृते सदाहाऽतिस्त्वङ्मांसान्तरजा भृशम् ३३
भवेच्च रागी श्वयथुर्जायन्ते मण्डलानि च
मांसेन कठिनः शोफो विवर्णः पिटिकास्तथा ३४
हर्षः पिपीलिकानां च सञ्चार इव जायते
चलः स्निग्धो मृदुः शीतः शोफो गात्रेष्वरोचकः ३५
आढ्यवात इति ज्ञेयः स कृच्छ्रो मेदसाऽवृते
स्पर्शमस्थ्यावृतेऽत्युष्णं पीडनं चाभिनन्दति ३६
सूच्येव तुद्यतेऽत्यर्थमङ्गं सीदति शूल्यते
मज्जावृते विनमनं जृम्भणं परिवेष्टनम् ३७
शूलं च पीड्यमानेन पाणिभ्यां लभते सुखम्

शुक्रावृतेऽतिवेगो वा न वा निष्फलताऽपि वा ३८
भुक्ते कुक्षौ रुजा जीर्णे शाम्यत्यन्नावृतेऽनिले
मूत्राप्रवृत्तिराध्मानं बस्तेर्मूत्रावृते भवेत् ३९
विडावृते विबन्धोऽध स्वस्थाने परिकृन्तति
व्रजत्याशु जरां स्नेहो भुक्ते चानह्यते नरः ४०
शकृत्पीडितमन्नेन दुःखं शुष्कं चिरात्सृजेत्
सर्वधात्वावृते वायौ श्रोणिवङ्क्षणपृष्ठरुक् ४१
विलोमो मारुतोऽस्वस्थं हृदयं पीड्यतेऽति च
भ्रमो मूर्च्छा रुजा दाहः पित्तेन प्राण आवृते ४२
विदग्धेऽन्ने च वमनम् उदानेऽपि भ्रमादयः
दाहोऽन्तरूर्जाभ्रंशश्च दाहो व्याने च सर्वगः ४३
क्लमोऽङ्गचेष्टासङ्गश्च ससन्तापः सवेदनः
समान ऊष्मोपहतिरतिस्वेदोऽरतिः सतृट् ४४
दाहश्च स्यात् अपाने तु मले हारिद्रवर्णता
रजोतिवृत्तिस्तापश्च योनिमेहनपायुषु ४५
श्लेष्मणा त्वावृते प्राणे सादस्तन्द्राऽरुचिर्वमिः
ष्ठीवनं क्षवथूद्गारनिःश्वासोच्छ्वाससङ्ग्रहः ४६
उदाने गुरुगात्रत्वमरुचिर्वाक्स्वरग्रहः
बलवर्णप्रणाशश्च व्याने पर्वास्थिवाग्ग्रहः ४७
गुरुताऽङ्गेषु सर्वेषु स्खलितं च गतौ भृशम्
समानेऽतिहिमाङ्गत्वमस्वेदो मन्दवह्निता ४८
अपाने सकफं मूत्रशकृतः स्यात्प्रवर्तनम्
इति द्वाविंशतिविधं वायोरावरणं विदुः ४९
प्राणादयस्तथाऽन्योन्यमावृणवन्ति यथाक्रमम्
सर्वेऽपि विंशतिविधं विद्यादावरणं च तत् ५०
निःश्वासोच्छ्वाससंरोधः प्रतिश्यायः शिरोग्रहः
हृद्रोगो मुखशोषश्च प्राणेनोदान आवृते ५१
उदानेनावृते प्राणे वर्णौजोबलसङ्क्षयः
दिशाऽनया च विभजेत्सर्वमावरणं भिषक् ५२
स्थानान्यवेक्ष्य वातानां वृद्धिं हानिं च कर्मणाम्

प्राणादीनां च पञ्चानां मिश्रमावरणं मिथः ५३
पित्तादिभिर्द्वादशभिर्मिश्राणां मिश्रितैश्च तैः
मिश्रैः पित्तादिभिस्तद्वन्मिश्रणाभिरनेकधा ५४
तारतम्यविकल्पाच्च यात्यावृतिरसङ्ख्यताम्
तां लक्षयेदवहितो यथास्वं लक्षणोदयात् ५५
शनैःशनै श्चोपशयाद्गूढामपि मुहुर्मुहुः
विशेषाज्जीवितं प्राण उदानो बलमुच्यते ५६
स्यात्तयोः पीडनाद्धानिरायुषश्च बलस्य च
आवृता वायवोऽज्ञाता ज्ञाता वा वत्सरं स्थिताः ५७
प्रयत्नेनापि दुःसाध्या भवेयुर्वाऽनुपक्रमाः
विद्रधिप्लीहहृद्रोगगुल्माग्निसदनादयः ५८
भवन्त्युपद्रवास्तेषामावृतानामुपेक्षणात् ५८-२

इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयंसहितायां
तृतीये निदानस्थानेवातशोणितनिदानं नाम षोडशोऽध्यायः १६
समाप्तं चेदं तृतीयं निदानस्थानम्

श्रीमद्वाग्भटविरचिते
अष्टाङ्गहृदये चिकित्सितस्थानम्
प्रथमोऽध्यायः

अथातो ज्वरचिकित्सितं व्याख्यास्यामः
इति ह स्माहुरात्रेयादयो महर्षयः
आमाशयस्थो हत्वाऽग्निं सामो मार्गान् पिधाय यत्
विदधाति ज्वरं दोषस्तस्मात्कुर्वीत लङ्घनम् १
प्राग्रूपेषु ज्वरादौ वा बलं यत्नेन पालयन्
बलाधिष्ठानमारोग्यमारोग्यार्थः क्रियाक्रमः २
लङ्घनैः क्षपिते दोषे दीप्तेऽग्नौ लाघवे सति
स्वास्थ्यं क्षुत्तृड् रुचिः पक्तिर्बलमोजश्च जायते ३
तत्रोत्कृष्टे समुत्क्लिष्टे कफप्राये चले मले
सहृल्लासप्रसेकान्नद्वेषकास विषूचिके ४
सद्योभुक्तस्य सञ्जाते ज्वरे सामे विशेषतः
वमनं वमनार्हस्य शस्तं कुर्यात्तदन्यथा ५
श्वासातीसारसम्मोह हृद्रोगविषमज्वरान्
पिप्पलीभिर्युतान् गालान् कलिङ्गैर्मधुकेन वा ६
उष्णाम्भसा समधुना पिबेत्सलवणेन वा
पटोलनिम्बकर्कोटवेत्रपत्रोदकेन वा ७
तर्पणेन रसेनेक्षोर्मद्यैः कल्पोदितानि वा
वमनानि प्रयुञ्जीत बलकालविभागवित् ८
कृतेऽकृते वा वमने ज्वरी कुर्याद्विशोषणम्
दोषाणां समुदीर्णानां पाचनाय शमाय च ९
दोषेण भस्मनेवाग्नौ छन्नेऽन्न न विपच्यते
तस्मादादोषपचनाज्ज्वरितानुपवासयेत् १०
तृष्णगल्पाल्पमुष्णाम्बु पिबेद्वातकफज्वरे
तत्कफं विलयं नीत्वा तृष्णामाशु निवर्तयेत् ११
उदीर्य चाग्निं स्रोतांसि मृदूकृत्य विशोधयेत्
लीनपित्तानिलस्वेदशकृन्मूत्रानु लोमनम् १२
निद्राजाड्यारुचिहरं प्राणानामवलम्बनम्

श्रीमद्वाग्भटविरचिते
अष्टाङ्गहृदये चिकित्सितस्थानम्
प्रथमोऽध्यायः

अथातो ज्वरचिकित्सितं व्याख्यास्यामः
इति ह स्माहुरात्रेयादयो महर्षयः
आमाशयस्थो हत्वाऽग्निं सामो मार्गान् पिधाय यत्
विदधाति ज्वरं दोषस्तस्मात्कुर्वीत लङ्घनम् १
प्राग्रूपेषु ज्वरादौ वा बलं यत्नेन पालयन्
बलाधिष्ठानमारोग्यमारोग्यार्थः क्रियाक्रमः २
लङ्घनैः क्षपिते दोषे दीप्तेऽग्नौ लाघवे सति
स्वास्थ्यं क्षुत्तृड् रुचिः पक्तिर्बलमोजश्च जायते ३
तत्रोत्कृष्टे समुत्क्लिष्टे कफप्राये चले मले
सहृल्लासप्रसेकान्नद्वेषकास विषूचिके ४
सद्योभुक्तस्य सञ्जाते ज्वरे सामे विशेषतः
वमनं वमनार्हस्य शस्तं कुर्यात्तदन्यथा ५
श्वासातीसारसम्मोह हृद्रोगविषमज्वरान्
पिप्पलीभिर्युतान् गालान् कलिङ्गैर्मधुकेन वा ६
उष्णाम्भसा समधुना पिबेत्सलवणेन वा
पटोलनिम्बकर्कोटवेत्रपत्रोदकेन वा ७
तर्पणेन रसेनेक्षोर्मद्यैः कल्पोदितानि वा
वमनानि प्रयुञ्जीत बलकालविभागवित् ८
कृतेऽकृते वा वमने ज्वरी कुर्याद्विशोषणम्
दोषाणां समुदीर्णानां पाचनाय शमाय च ९
दोषेण भस्मनेवाग्नौ छन्नेऽन्न न विपच्यते
तस्मादादोषपचनाज्ज्वरितानुपवासयेत् १०
तृष्णगल्पाल्पमुष्णाम्बु पिबेद्वातकफज्वरे
तत्कफं विलयं नीत्वा तृष्णामाशु निवर्तयेत् ११
उदीर्य चाग्निं स्रोतांसि मृदूकृत्य विशोधयेत्
लीनपित्तानिलस्वेदशकृन्मूत्रानु लोमनम् १२
निद्राजाड्यारुचिहरं प्राणानामवलम्बनम्

विपरीतमतः शीतं दोषसङ्घातवर्द्धनम् १३
उष्णमेवंगुणत्वेऽपि युञ्ज्यान्नैकान्तपित्तले
उद्रिक्तपित्ते दवथुदाहमोहातिसारिणि १४
विषमद्योत्थिते ग्रीष्मे क्षतक्षीणेऽस्रपित्तिनि
घनचन्दनशुण्ठ्यम्बुपर्पटोशीरसाधितम् १५
शीतं तेभ्यो हितं तोयं पाचनं तृड्ज्वरापहम्
ऊष्मा पित्तादृते नास्ति ज्वरो नास्त्यूष्मणा विना १६
तस्मात्पित्तविरुद्धानि त्यजेत् पित्ताधिकेऽधिकम्
स्नानाभ्यङ्गप्रदेहांश्च परिशेषं च लङ्घनम् १७
अजीर्ण इव शूलघ्नं सामे तीव्ररुजि ज्वरे
न पिबेदौषधं तद्धि भूय एवाममावहेत् १८
आमाभिभूतकोष्ठस्य क्षीरं विषमहेरिव
सोदर्दपीनसश्वासे जङ्घापर्वास्थिशूलिनि १९
वातश्लेष्मात्मके स्वेदः प्रशस्तः स प्रवर्तयेत्
स्वेदमूत्रशकृद्वातान् कुर्यादग्नेश्च पाटवम् २०
स्नेहोक्तमाचारविधिं सर्वशश्चानुपालयेत्
लङ्घनं स्वेदनं कालो यवाग्वस्तिक्तको रसः २१
मलानां पाचनानि स्युर्यथावस्थं क्रमेण वा
शुद्धवातक्षयागन्तुजीर्णज्वरिषु लङ्घनम् २२
नेष्यते तेषु हि हितं शमनं यन्न कर्शनम्
तत्र सामज्वराकृत्या जानीयादविशोषितम् २३
द्विविधोपक्रमज्ञानमवेक्षेत च लङ्घने
युक्तं लङ्घितलिङ्गैस्तु तं पेयाभिरुपाचरेत् २४
यथास्वौषधसिद्धाभिर्मण्ड पूर्वाभिरादितः
षडहं वा मृदुत्वं वा ज्वरो यावदवाप्नुयात् २५
तस्याग्निर्दीप्यते ताभिः समिद्भिरिव पावकः
प्राग्लाजपेयां सुजरां सशुण्ठीधान्यपिप्पलीम् २६
ससैन्धवां तथाऽम्लार्थी तां पिबेत्सहदाडिमाम्
सृष्टविड् बहुपित्तो वा सशुण्ठीमाक्षिकां हिमाम् २७
बस्तिपार्श्वशिरःशूली व्याघ्रीगोक्षुरसाधिताम्

पृश्निपर्णीबलाबिल्वनागरोत्पलधान्यकैः २८
सिद्धां ज्वरातिसार्यम्लां पेयां दीपनपाचनीम्
ह्रस्वेन पञ्चमूलेन हिक्कारुक्श्वासकासवान् २९
पञ्चमूलेन महता कफार्तो यवसाधिताम्
विबद्धवर्चाः सयवां पिप्पल्यामलकैः कृताम् ३०
यवागूं सर्पिषा भृष्टां मलदोषानुलोमनीम्
चविकापिप्पलीमूल द्राक्षामलकनागरैः ३१
कोष्ठे विबद्धे सरुजि पिबेत्तु परिकर्तिनि
कोलवृक्षाम्लकलशीधावनीश्रीफलैः कृताम् ३२
अस्वेदनिद्रस्तृष्णार्तः सितामलकनागरैः
सिताबदरमृद्वीकासारिवामुस्तचन्दनैः ३३
तृष्णाच्छर्दिपरीदाहज्वरघ्नीं क्षौद्रसंयुताम्
कुर्यात्पेयौषधैरेव रसयूषादिकानपि ३४
मद्योद्भवे मद्यनित्ये पित्तस्थानगते कफे
ग्रीष्मे तयोर्वाऽधिकयोस्तृट्छर्दिर्दाहपीडिते ३५
ऊर्ध्वं प्रवृत्ते रक्ते च पेयां नेच्छन्ति तेषु तु
ज्वरापहैः फलरसैरद्भिर्वा लाजतर्पणान् ३६
पिबेत्सशर्कराक्षौद्रांस्ततो जीर्णे तु तर्पणे
यवाग्वां वौदनं क्षुद्वानश्नीयाद्भृष्टतण्डुलम् ३७
दकलावणिकैर्यूषै रसैर्वा मुद्गलावजैः
इत्ययं षडहो नेयो बलं दोषं च रक्षता ३८
ततः पक्वेषु दोषेषु लङ्घनाद्यैः प्रशस्यते
कषायो दोषशेषस्य पाचनः शमनोऽथवा ३९
तिक्तः पित्ते विशेषेण प्रयोज्यः कटुकः कफे
पित्तश्लेष्महरत्वेऽपि कषायः स न शस्यते ४०
नवज्वरे मलस्तम्भात्कषायो विषमज्वरम्
कुरुतेऽरुचिहृल्लासहिध्माध्मानादिकानपि ४१
सप्ताहादौषधं केचिदाहुरन्ये दशाहतः
केचिल्लघ्वन्नभुक्तस्य योज्यमामोल्बणे न तु ४२
तीव्रज्वरपरीतस्य दोषवेगोदये यतः

दोषेऽथवाऽतिनिचिते तन्द्रास्तैमित्यकारिणि ४३
अपच्यमानं भैषज्यं भूयो ज्वलयति ज्वरम्
मृदुर्ज्वरो लघुर्देहश्चलिताश्च मला यदा ४४
अचिरज्वरितस्यापि भेषजं योजयेत्तदा
मुस्तया पर्पटं युक्तं शुण्ठ्या दुःस्पर्शयाऽपि वा ४५
पाक्यं शीतकषायं वा पाठोशीरं सवालकम्
पिबेत्तद्वच्च भूनिम्बगुडूचीमुस्तनागरम् ४६
यथायोगमिमे योज्याः कषाया दोषपाचनाः
ज्वरारोचकतृष्णास्यवैरस्यापक्तिनाशनाः ४७
कलिङ्गकाः पटोलस्य पत्रं कटुकरोहिणी ४८
पटोलं सारिवा मुस्ता पाठा कटुकरोहिणी
पटोलनिम्बत्रिफला मृद्वीकामुस्तवत्सकाः ४९
किराततिक्तममृता चन्दनं विश्वभेषजम्
धात्रीमुस्तामृताक्षौद्रमर्ध श्लोकसमापनाः ५०
पञ्चैते सन्ततादीनां पञ्चानां शमना मताः
दुरालभामृतामुस्तानागरं वातजे ज्वरे ५१
अथवा पिप्पलीमूलगुडूचीविश्वभेषजम्
कनीयः पञ्चमूलं च पित्ते शक्रयवाघनम् ५२
कटुका चेति सक्षौद्रं मुस्तापर्पटकं तथा
सधन्वयासभूनिम्बं वत्सकाद्यो गणः कफे ५३
अथवा वृषगाङ्गेयीशृङ्गवेरदुरालभाः
रुग्विबन्धानिलश्लेष्मयुक्ते दीपनपाचनम् ५४
अभयापिप्पली मूलशम्याककटुकाघनम्
द्राक्षामधूकमधु करोध्रकाश्मर्यसारिवाः ५५
मुस्तामलकह्रीबेरपद्म केसरपद्मकम्
मृणालचन्दनोशीर नीलोत्पलपरूषकम् ५६
फाण्टो हिमो वा द्राक्षादिर्जातीकुसुमवासितः
युक्तो मधुसितालाजैर्जयत्यनिलपित्तजम् ५७
ज्वरं मदात्ययं छर्दिं मूर्च्छां दाहं श्रमं भ्रमम्
ऊर्ध्वगं रक्तपित्तं च पिपासां कामलामपि ५८

पाचयेत्कटुकां पिष्ट्वा कर्परेऽभिनवे शुचौ
निष्पीडितो घृतयुतस्तद्रसो ज्वरदाहजित् ५९
कफवाते वचातिक्तापाठारग्वधवत्सकाः
पिप्पलीचूर्णयुक्तो वा क्वाथश्छिन्नोद्भवोद्भवः ६०
व्याघ्रीशुण्ठ्यमृताक्वाथः पिप्पलीचूर्णसंयुतः
वातश्लेष्मज्वर श्वासकासपीनसशूलजित् ६१
पथ्याकुस्तुम्बरीमुस्ता शुण्ठीकट्तृणपर्पटम्
सकट्फलवचाभार्ङ्गीदेवाह्वं मधुहिङ्गुमत् ६२
कफवातज्वरष्ठीवकुक्षि हृत्पार्श्ववेदनाः
कण्ठामयास्यश्वयथु कासश्वासान्नियच्छति ६३
आरग्वधादिः सक्षौद्रः कफपित्तज्वरं जयेत्
तथा तिक्तावृषोशीरत्रायन्तीत्रिफलामृताः ६४
पटोलातिविषानिम्ब मूर्वाधन्वयवासकाः
सन्निपातज्वरे व्याघ्रीदेवदारुनिशाघनम् ६५
पटोलपत्रनिम्बत्वक्त्रिफला कटुकायुतम्
नागरं पौष्करं मूलं गुडूची कण्टकारिका ६६
सकासश्वासपार्श्वार्तौ वातश्लेष्मोत्तरे ज्वरे
मधूकपुष्पमृद्वीकात्रायमाणा परूषकम् ६७
सोशीरतिक्तात्रिफलाकाश्मर्यं कल्पयेद्धिमम्
कषायं तं पिबन् काले ज्वरान् सर्वानपोहति ६८
जात्यामलकमुस्तानि तद्वद्धन्वयवासकम्
बद्धविट् कटुकाद्राक्षात्रायन्तीत्रिफलागुडम् ६९
जीर्णौषधोऽन्न पेयाद्यमाचरेत् श्लेष्मवान्न तु
पेया कफं वर्धयति पङ्कं पांसुषु वृष्टिवत् ७०
श्लेष्माभिष्यण्णदेहानामतः प्रागपि योजयेत्
यूषान् कुलत्थचणककलायादिकृतान् लघून् ७१
रूक्षांस्तिक्तरसोपेतान् हृद्यान् रुचिकरान् पटून्
रक्ताद्याः शालयो जीर्णाः षष्टिकाश्च ज्वरे हिताः ७२
श्लेष्मोत्तरे वीततुषास्तथा वाटीकृता यवाः
ओदनस्तैः स्रुतो द्विस्त्रिः प्रयोक्तव्यो यथायथम् ७३

दोषदूष्यादिबलतो ज्वरघ्नक्वाथसाधितः
मुद्गाद्यैर्लघुभिर्यूषाः कुलत्थैश्च ज्वरापहाः ७४
कारवेल्लककर्कोटबाल मूलकपर्पटैः
वार्ताकनिम्बकुसुमपटोल फलपल्लवैः ७५
अत्यन्तलघुभिर्मांसैर्जाङ्गलैश्च हिता रसाः
व्याघ्रीपरूषतर्कारीद्राक्षामलकदाडिमैः ७६
संस्कृताः पिप्पलीशुण्ठीधान्यजीरकसैन्धवैः
सितामधुभ्यां प्रायेण संयुता वा कृताकृताः ७७
अनम्लतक्रसिद्धानि रुच्यानि व्यञ्जनानि च
अच्छान्यनलसम्पन्नान्यनुपानेऽपि योजयेत् ७८
तानि क्वथितशीतं च वारि मद्यं च सात्म्यतः
सज्वरं ज्वरमुक्तं वा दिनान्ते भोजयेल्लघु ७९
श्लेष्मक्षयविवृद्धोष्मा बलवाननलस्तदा
यथोचितेऽथवा काले देशसात्म्यानुरोधतः ८०
प्रागल्पवह्निर्भुञ्जानो न ह्यजीर्णेन पीड्यते
कषायपानपथ्यान्नैर्दशाह इति लङ्घिते ८१
सर्पिर्दद्यात्कफे मन्दे वातपित्तोत्तरे ज्वरे
पक्वेषु दोषेष्वमृतं तद्विषोपममन्यथा ८२
दशाहे स्यादतीतेऽपि ज्वरोपद्रववृद्धिकृत्
लङ्घनादिक्रमं तत्र कुर्यादाकफसङ्क्षयात् ८३
देहधात्वबलत्वाच्च ज्वरो जीर्णोऽनुवर्तते
रूक्षं हि तेजो ज्वरकृत्तेजसा रूक्षितस्य च ८४
वमनस्वेदकालाम्बु कषायलघुभोजनैः
यः स्यादतिबलो धातुः सहचारी सदागतिः ८५
तस्य संशमनं सर्पिर्दीप्तस्येवाम्बु वेश्मनः
वातपित्तजितामग्र्यं संस्कारं चानुरुध्यते ८६
सुतरां तद्ध्यतो दद्याद्यथास्वौषधसाधितम्
विपरीतं ज्वरोष्माणं जयेत्पित्तं च शैत्यतः ८७
स्नेहाद्वातं घृतं तुल्यं योगसंस्कारतः कफम्
पूर्वे कषायाः सघृताः सर्वे योज्या यथामलम् ८८

त्रिफलापिचुमन्दत्वङ्मधुकं बृहतीद्वयम्
समसूरदलं क्वाथः सघृतो ज्वरकासहा ८९
पिप्पलीन्द्रयवधावनितिक्ता सारिवामलकतामलकीभिः
बिल्वमुस्तहिमपालनिसेव्यैर्द्राक्षयाऽतिविषया स्थिरया च ९०
घृतमाशु निहन्ति साधितं ज्वरमग्निं विषमं हलीमकम्
अरुचिं भृशतापमंसयोर्वमथुं पार्श्वशिरोरुजं क्षयम् ९१
तैल्वकं पवनजन्मनि ज्वरे योजयेत्त्रिवृतया वियोजितम्
तिक्तकं वृषघृतं च पैत्तिके यच्च पालनिकया शृतं हविः ९२
विडङ्गसौवर्चलचव्यपाठाव्योषाग्निसिन्धूद्भवयावशूकैः
पलांशकैः क्षीरसमं घृतस्यप्रस्थं पचेज्जीर्णकफज्वरघ्नम् ९३
गुडूच्या रसकल्काभ्यां त्रिफलाया वृषस्य च
मृद्वीकाया बलायाश्च स्नेहाः सिद्धा ज्वरच्छिदः ९४
जीर्णे घृते च भुञ्जीत मृदुमांसरसौदनम्
बलं ह्यलं दोषहरं परं तच्च बलप्रदम् ९५
कफपित्तहरा मुद्गकारवेल्लादिजा रसाः
प्रायेण तस्मान्न हिता जीर्णे वातोत्तरे ज्वरे ९६
शूलोदावर्तविष्टम्भजनना ज्वरवर्धनाः
न शाम्यत्येवमपि चेज्ज्वरः कुर्वीत शोधनम् ९७
शोधनार्हस्य वमनं प्रागुक्तं तस्य योजयेत्
आमाशयगते दोषे बलिनः पालयन्बलम् ९८
पक्वे तु शिथिले दोषे ज्वरे वा विषमद्यजे
मोदकं त्रिफलाश्यामात्रिवृत्पिप्पलिकेसरैः ९९
ससितामधुभिर्दद्याद्व्योषाद्यं वा विरेचनम्
लिह्याद्वा त्रैवृतं चूर्णं संयुक्तं मधुसर्पिषा
द्राक्षाधात्रीरसं तद्वत्सद्राक्षां वा हरीतकीम् १००
आरग्वधं वा पयसा मृद्वीकानां रसेन वा
त्रिफलां त्रायमाणां वा पयसा ज्वरितः पिबेत् १०१
विरिक्तानां च संसर्गी मण्डपूर्वा यथाक्रमम्
च्यवमानं ज्वरोत्क्लिष्टमुपेक्षेत मलं सदा १०२
पक्वोऽपि हि विकुर्वीत दोषः कोष्ठे कृतास्पदः

अतिप्रवर्तमानं वा पाचयन् सङ्ग्रहं नयेत् १०३
आमसङ्ग्रहणे दोषा दोषोपक्रम ईरिताः
पाययेद्दोषहरणं मोहादामज्वरे तु यः १०४
प्रसुप्तं कृष्णसर्पं स कराग्रेण परामृशेत्
ज्वरक्षीणस्य न हितं वमनं न विरेचनम् १०५
कामं तु पयसा तस्य निरूहैर्वा हरेन्मलान्
क्षीरोचितस्य प्रक्षीणश्लेष्मणो दाहतृड्वतः १०६
क्षीरं पित्तानिलार्तस्य पथ्यमप्यतिसारिणः
तद्वपुर्लङ्घनोत्तप्तं प्लुष्टं वनमिवाग्निना १०७
दिव्याम्बु जीवयेत्तस्य ज्वरं चाशु नियच्छति
संस्कृतं शीतमुष्णं वा तस्माद्धारोष्णमेव वा १०८
विभज्य काले युञ्जीत ज्वरिणं हन्त्यतोऽन्यथा
पयः सशुण्ठीखर्जूरमृद्वीकाशर्कराघृतम् १०९
शृतशीतं मधुयुतं तृड्दाहज्वरनाशनम्
तद्वद् द्राक्षाबलायष्टीसारिवाकणचन्दनैः ११०
चतुर्गुणेनाम्भसा वा पिप्पल्या वा शृतं पिबेत्
कासाच्छ्वासाच्छिरःशूलात्पार्श्वशूलाच्चिरज्वरात् १११
मुच्यते ज्वरितः पीत्वा पञ्चमूलीशृतं पयः
शृतमेरण्डमूलेन बालबिल्वेन वा ज्वरात् ११२
धारोष्णं वा पयः पीत्वा विबद्धानिलवर्चसः
सरक्तपिच्छातिसृतेः सतृट्शूलप्रवाहिकात् ११३
सिद्धं शुण्ठीबलाव्याघ्रीगोकण्टकगुडैः पयः
शोफमूत्रशकृद्वातविबन्धज्वरकासजित् ११४
वृश्चीवबिल्ववर्षाभूसाधितं ज्वरशोफनुत्
शिंशिपासारसिद्धं च क्षीरमाशु ज्वरापहम् ११५
निरूहस्तु बलं वह्निं विज्वरत्वं मुदं रुचिम्
दोषे युक्तः करोत्याशु पक्वे पक्वाशयं गते ११६
पित्तं वा कफपित्तं वा पक्वाशयगतं हरेत्
स्रंसनं त्रीनपि मलान् बस्तिः पक्वाशयाश्रयान् ११७
प्रक्षीणकफपित्तस्य त्रिकपृष्ठकटिग्रहे

दीप्ताग्नेर्बद्धशकृतः प्रयुञ्जीतानुवासनम् ११८
पटोलनिम्बच्छदनकटुका चतुरङ्गुलैः
स्थिराबलागोक्षुरक मदनोशीरवालकैः ११९
पयस्यर्धोदके क्वाथं क्षीरशेषं विमिश्रितम्
कल्कितैर्मुस्तमदनकृष्णामधुकवत्सकैः १२०
बस्तिं मधुघृताभ्यां च पीडयेज्ज्वरनाशनम्
चतस्रः पर्णिनीर्यष्टीफलोशीरनृपद्रुमान् १२१
क्वाथयेत्कल्कयेद्यष्टीशताह्वाफलिनीफलम्
मुस्तं च बस्तिः सगुडक्षौद्रसर्पिर्ज्वरापहः १२२
जीवन्तीं मदनं मेदां पिप्पलद्यं मधुकं वचाम्
ऋद्धिं रास्नां बलां बिल्वं शतपुष्पां शतावरीम् १२३
पिष्ट्वा क्षीरं जलं सर्पिस्तैलं चैकत्र साधितम्
ज्वरेऽनुवासनं दद्याद्यथास्नेहं यथामलम् १२४
ये च सिद्धिषु वक्ष्यन्ते बस्तयो ज्वरनाशनाः
शिरोरुग्गौरवश्लेष्महरमिन्द्रिय बोधनम् १२५
जीर्णज्वरे रुचिकरं दद्यान्नस्यं विरेचनम्
स्नैहिकं शून्यशिरसो दाहार्ते पित्तनाशनम् १२६
धूमगण्डूषकवलान् यथादोषं च कल्पयेत्
प्रतिश्यायास्यवैरस्यशिरः कण्ठामयापहान् १२७
अरुचौ मातुलुङ्गस्य केसरं साज्यसैन्धवम्
धात्रीद्राक्षासितानां वा कल्कमास्येन धारयेत् १२८
यथोपशयसंस्पर्शान् शीतोष्णद्रव्यकल्पितान्
अभ्यङ्गालेपसेकादीन् ज्वरे जीर्णे त्वगाश्रिते १२९
कुर्यादञ्जनधूमांश्च तथैवागन्तुजेऽपि तान्
दाहे सहस्रधौतेन सर्पिषाऽभ्यङ्गमाचरेत् १३०
सूत्रोक्तैश्च गणैस्तैस्तैर्मधुराम्लकषायकैः
दूर्वादिभिर्वा पित्तघ्नैः शोधनादिगणोदितैः १३१
शीतवीर्यैर्हिमस्पर्शैः क्वाथकल्कीकृतैः पचेत्
तैलं सक्षीरमभ्यङ्गात्सद्यो दाहज्वरापहम् १३२
शिरो गात्रं च तैरेव नातिपिष्टैः प्रलेपयेत्

तत्क्वाथेन परीषेकमवगाहं च योजयेत् १३३
तथाऽरनालसलिलक्षीरशुक्तघृतादिभिः
कपित्थमातुलुङ्गाम्लविदारीरोध्रदाडिमैः १३४
बदरीपल्लवोत्थेन फेनेनारिष्टकस्य वा
लिप्तेऽङ्गे दाहरुङ्मोहाश्च्छर्दिस्तृष्णा च शाम्यति १३५
यो वर्णितः पित्तहरो दोषोपक्रमणे क्रमः
तं च शीलयतः शीघ्रं सदाहो नश्यति ज्वरः १३६
वीर्योष्णैरुष्णसंस्पर्शैस्तगरा गुरुकुङ्कुमैः
कुष्ठस्थौणेयशैलेय सरलामरदारुभिः १३७
नखरास्नापुरवचा चण्डैलाद्वयचोरकैः
पृथ्वीकाशिग्रुसुर साहिंस्राध्यामकसर्षपैः १३८
दशमूलामृतैरण्डद्वय पत्तूररोहिषैः
तमालपत्रभूतीकशल्लकीधान्य दीप्यकैः १३९
मिशिमाषकुलत्थाग्नि प्रकीर्यानाकुलीद्वयैः
अन्यैश्च तद्विधैर्द्रव्यैः शीते तैलं ज्वरे पचेत् १४०
क्वथितैः कल्कितैर्युक्तैः सुरासौवीरकादिभिः
तेनाभ्यञ्ज्यात्सुखोष्णेन तैः सुपिष्टैश्च लेपयेत् १४१
कवोष्णैस्तैः परीषेकमवगाहं च कल्पयेत्
केवलैरपि तद्वच्च सुक्तगोमूत्रमस्तुभिः १४२
आरग्वधादिवर्गं च पानाभ्यञ्जनलेपने
धूपानगरुजान् यांश्च वक्ष्यन्ते विषमज्वरे १४३
अग्न्यनग्निकृतान् स्वेदान् स्वेदि भेषजभोजनम्
गर्भभूवेश्मशयनं कुथकम्बलरल्लकान् १४४
निर्धूमदीप्तैरङ्गारैर्हसन्तीश्च हसन्तिकाः
मद्यं सत्र्यूषणं तक्रं कुलत्थव्रीहिकोद्रवान् १४५
संशीलयेद्वेपथुमान् यच्चान्यदपि पित्तलम्
दयिताः स्तनशालिन्यः पीना विभ्रमभूषणाः १४६
यौवनासवमत्ताश्च तमालिङ्गेयुरङ्गनाः
वीतशीतं च विज्ञाय तास्ततोऽपनयेत्पुनः १४७
वर्धनेनैकदोषस्य क्षपणेनोच्छ्रितस्य वा

कफस्थानानुपूर्व्या वा तुल्यकक्षाञ्जयेन्मलान् १४८
सन्निपातज्वरस्यान्ते कर्णमूले सुदारुणः
शोफः सञ्जायते येन कश्चिदेव विमुच्यते १४९
रक्तावसेचनैः शीघ्रं सर्पिःपानैश्च तं जयेत्
प्रदेहैः कफपित्तघ्नैर्नावनैः कवलग्रहैः १५०
शीतोष्णस्निग्धरूक्षाद्यैर्ज्वरो यस्य न शाम्यति
शाखानुसारी तस्याशु मुञ्चेद्बाह्वोः क्रमाच्छिराम् १५१
अयमेव विधिः कार्यो विषमेऽपि यथायथम्
ज्वरे विभज्य वातादीन् यश्चानन्तरमुच्यते १५२
पटोलकटुकामुस्ता प्राणदामधुकैः कृताः
त्रिचतुःपञ्चशः क्वाथा विषमज्वरनाशनाः १५३
योजयेत्त्रिफलां पथ्यां गुडूचीं पिप्पलद्यं पृथक्
तैस्तैर्विधानैः सगुडं भल्लातकमथापि वा १५४
लङ्घनं बृंहणं वाऽदौ ज्वरागमनवासरे
प्रातः सतैलं लशुनं प्राग्भक्तं वा तथा घृतम् १५५
जीर्णं तद्वद्दधि पयस्तक्रं सर्पिश्च षट्पलम्
कल्याणकं पञ्चगव्यं तिक्ताख्यं वृषसाधितम् १५६
त्रिफलाकोलतर्कारीक्वाथे दध्ना शृतं घृतम्
तिल्वकत्वक्कृतावापं विषमज्वरजित्परम् १५७
सुरां तीक्ष्णं च यन्मद्यं शिखितित्तिरिदक्षजम्
मांसं मेद्योष्णवीर्यं च सहान्नेन प्रकामतः १५८
सेवित्वा तदहः स्वप्यादथवा पुनरुल्लिखेत्
सर्पिषो महतीं मात्रां पीत्वा वा छर्दयेत्पुनः १५९
नीलिनीमजगन्धां च त्रिवृतां कटुरोहिणीम्
पिबेज्ज्वरस्यागमने स्नेहस्वेदोपपादितः १६०
मनोह्वा सैन्धवं कृष्णा तैलेन नयनाञ्जनम्
योज्यं हिङ्गुसमा व्याघ्रीवसा नस्यं ससैन्धवम् १६१
पुराणसर्पिः सिंहस्य वसा तद्वत्ससैन्धवा
पलङ्कषा निम्बपत्रं वचा कुष्ठं हरीतकी १६२
सर्षपाः सयवाः सर्पिर्धूपो विड्वा बिडालजा

पुरध्यामवचासर्जनिम्बार्कागरुदारुभिः १६३
धूपो ज्वरेषु सर्वेषु कार्योऽयमपराजितः
धूपनस्याञ्जनोत्रासा ये चोक्ताश्चित्तवैकृते १६४
दैवाश्रयं च भैषज्यं ज्वरान् सर्वान् व्यपोहति
विशेषाद्विषमान् प्रायस्ते ह्यागन्त्वनुबन्धजाः १६५
यथास्वं च सिरां विध्येदशान्तौ विषमज्वरे
केवलानिलवीसर्पविस्फोटाभिहतज्वरे १६६
सर्पिःपान हिमालेपसेकमांसरसाशनम्
कुर्याद्यथास्वमुक्तं च रक्तमोद्मादि साधनम् १६७
ग्रहोत्थे भूतविद्योक्तं बलिमन्त्रादि साधनम्
ओषधीगन्धजे पित्तशमनं विषजिद्विषे १६८
इष्टैरर्थैर्मनोज्ञैश्च यथादोषशमेन च
हिताहितविवेकैश्च ज्वरं क्रोधादिजं जयेत् १६९
क्रोधजो याति कामेन शान्तिं क्रोधेन कामजः
भयशोकोद्भवौ ताभ्यां भीशोकाभ्यां तथेतरौ १७०
शापाथर्वणमन्त्रोत्थे विधिर्दैवव्यपाश्रयः
ते ज्वराः केवलाः पूर्वं व्याप्यन्तेऽनन्तरं मलैः १७१
तस्माद्दोषानुसारेण तेष्वाहारादि कल्पयेत्
न हि ज्वरोऽनुबध्नाति मारुताद्यैर्विना कृतः १७२
ज्वरकालस्मृतिं चास्य हारिभिर्विषयैर्हरेत्
करुणार्द्रं मनः शुद्धं सर्वज्वरविनाशनम् १७३
त्यजेदाबललाभाच्च व्यायामस्नानमैथुनम्
गुर्वसात्म्यविदाह्यन्नं यच्चान्यज्ज्वरकारणम् १७४
न विज्वरोऽपि सहसा सर्वान्नीनो भवेत्तथा
निवृत्तोऽपि ज्वरः शीघ्रं व्यापादयति दुर्बलम् १७५
सद्यः प्राणहरो यस्मात्तस्मात्तस्य विशेषतः
तस्यां तस्यामवस्थायां तत्तत्कुर्याद्भिषग्जितम् १७६
ओषधयो मणयश्च सुमन्त्राः साधुगुरुद्विजदैवतपूजाः
प्रीतिकरा मनसो विषयाश्च घ्नन्त्यपि विष्णुकृतं ज्वरमुग्रम् १७७
इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां

चतुर्थे
चिकित्सितस्थानेज्वरचिकित्सितं नाम प्रथमोऽध्यायः १

द्वितीयोऽध्यायः
अथातो रक्तपित्तचिकित्सितं व्याख्यास्यामः
इति ह स्माहुरात्रेयादयो महर्षयः
ऊर्ध्वगं बलिनोऽवेगमेकदोषानुगं नवम्
रक्तपित्तं सुखे काले साधयेन्निरुपद्रवम् १
अधोगं यापयेद्रक्तं यच्च दोषद्वयानुगम्
शान्तं शान्तं पुनः कुप्यन्मार्गान्मार्गान्तरं च यत् २
अतिप्रवृत्तं मन्दाग्नेस्त्रिदोषं द्विपथं त्यजेत्
ज्ञात्वा निदानमयनं मलावनुबलौ बलम् ३
देशकालाद्यवस्थां च रक्तपित्ते प्रयोजयेत्
लङ्घनं बृंहणं वाऽदौ शोधनं शमनं तथा ४
सन्तर्पणोत्थं बलिनो बहुदोषस्य साधयेत्
ऊर्ध्वभागं विरेकेण वमनेन त्वधोगतम् ५
शमनैर्बृंहणैश्चान्यल्लङ्घ्यबृंह्यानवेक्ष्य च
ऊर्ध्वं प्रवृत्ते शमनौ रसौ तिक्तकषायकौ ६
उपवासश्च निःशुण्ठीषडङ्गोदकपायिनः
अधोगे रक्तपित्ते तु बृंहणो मधुरो रसः ७
ऊर्ध्वगे तर्पणं योज्यं प्राक् च पेया त्वधोगते
अश्नतो बलिनोऽशुद्धं न धार्यं तद्धि रोगकृत् ८
धारयेदन्यथा शीघ्रमग्निवच्छीघ्रकारि तत्
त्रिवृच्छ्यामाकषायेण कल्केन च सशर्करम् ९
साधयेद्विधिवल्लेहं लिह्यात्पाणितलं ततः
त्रिवृता त्रिफला श्यामा पिप्पली शर्करा मधु १०
मोदकः सन्निपातोर्ध्वरक्तशोफज्वरापहः
त्रिवृत्समसिता तद्वत् पिप्पलीपादसंयुता ११
वमनं फलसंयुक्तं तर्पणं ससितामधु
ससितं वा जलं क्षौद्रयुक्तं वा मधुकोदकम् १२

क्षीरं वा रसमिक्षोर्वा शुद्धस्यानन्तरो विधिः
यथास्वं मन्थपेयादिः प्रयोज्यो रक्षता बलम् १३
मन्थो ज्वरोक्तो द्राक्षादिः पित्तघ्नैर्वा फलैः कृतः
मधुखर्जूरमृद्वीकापरूष कसिताम्भसा १४
मन्थो वा पञ्चसारेण सघृतैर्लाजसक्तुभिः
दाडिमामलकाम्लो वा मन्दाग्न्यम्लाभिलाषिणाम् १५
कमलोत्पलकिञ्जल्कपृश्निपर्णी प्रियङ्गुकाः
उशीरं शाबरं रोध्रं शृङ्गबेरं कुचन्दनम् १६
ह्रीबेरं धातकीपुष्पं बिल्वमध्यं दुरालभा
अर्धार्धैर्विहिताः पेया वक्ष्यन्ते पादयौगिकाः १७
भूनिम्बसेव्यजलदा मसूराः पृश्निपर्ण्यपि
विदारिगन्धा मुद्गाश्च बला सर्पिर्ह रेणुकाः १८
जाङ्गलानि च मांसानि शीतवीर्याणि साधयेत्
पृथक्पृथग्जले तेषां यवागूः कल्पयेद्रसे १९
शीताः सशर्कराक्षौद्रास्तद्वन्मांसरसानपि
ईषदम्लाननम्लान् वा घृतभृष्टान् सशर्करान् २०
शूकशिम्बीभवं धान्यं रक्ते शाकं च शस्यते
अन्नस्वरूपविज्ञाने यदुक्तं लघु शीतलम् २१
पूर्वोक्तमम्बु पानीयं पञ्चमूलेन वा शृतम्
लघुना शृतशीतं वा मध्वम्भो वा फलाम्बु वा २२
शशः सवास्तुकः शस्तो विबन्धे तित्तिरिः पुनः
उदुम्बरस्य निर्यूहे साधितो मारुतेऽधिके २३
प्लक्षस्य बर्हिणस्तद्वन्न्यग्रोधस्य च कुक्कुटः
यत्किञ्चिद्रक्तपित्तस्य निदानं तच्च वर्जयेत् २४
वासारसेन फलिनीमृद्रोध्राञ्जनमाक्षिकम्
पित्तासृक् शमयेत्पीतं निर्यासो वाऽटरूषकात् २५
शर्करामधुसंयुक्तः केवलो वा शृतोऽपि वा
वृषः सद्यो जयत्यस्त्रं स ह्यस्य परमौषधम् २६
पटोलमालतीनिम्ब चन्दनद्वयपद्मकम्
रोध्रो वृषस्तन्दुलीयः कृष्णा मृन्मदयन्तिका २७

शतावरी गोपकन्या काकोल्यौ मधुयष्टिका
रक्तपित्तहराः क्वाथास्त्रयः समधुशर्कराः २८
पलाशवल्कक्वाथो वा सुशीतः शर्करान्वितः
लिह्याद्वा मधुसर्पिर्भ्यां गवाश्वशकृतो रसम् २९
सक्षौद्रं ग्रथिते रक्ते लिह्यात्पारावताच्छकृत्
अतिनिःस्रुतरक्तश्च क्षौद्रेण रुधिरं पिबेत् ३०
जाङ्गलं भक्षयेद्वाऽजमामं पित्तयुतं यकृत्
चन्दनोशीरजलदलाजमुद्गकणायवैः ३१
बलाजले पर्युषितैः कषायो रक्तपित्तहा
प्रसादश्चन्दनाम्भोजसेव्यमृद्भृष्टलोष्टजः ३२
सुशीतःससिताक्षौद्रः शोणितातिप्रवृत्तिजित्
आपोथ्य वा नवे कुम्भे प्लावयेदिक्षुगण्डिकाः ३३
स्थितं तद्गुप्तमाकाशे रात्रिं प्रातः स्रुतं जलम्
मधुमद्विकचाम्भोजकृतोत्तंसं च तद्गुणम् ३४
ये च पित्तज्वरे चोक्ताः कषायास्तांश्च योजयेत्
कषायैर्विविधैरेभिर्दीप्तेऽग्नौ विजिते कफे ३५
रक्तपित्तं न चेच्छाम्येत्तत्र वातोल्बणे पयः
युञ्ज्याच्छागं शृतं तद्वद्गव्यं पञ्चगुणेऽम्भसि ३६
पञ्चमूलेन लघुना शृतं वा ससितामधु
जीवकर्षभकद्राक्षा बलागोक्षुरनागरैः ३७
पृथक्पृथक्शृतं क्षीरं सघृतं सितयाऽथवा
गोकण्टकाभीरुशृतं पर्णिनीभिस्तथा पयः ३८
हन्त्याशु रक्तं सरुजं विशेषान्मूत्रमार्गगम्
विण्मार्गगे विशेषेण हितं मोचरसेन तु ३९
वटप्ररोहैः शुङ्गैर्वा शुण्ठ्युदीच्योत्पलैरपि
रक्तातिसारदुर्नामचिकित्सां चात्र कल्पयेत् ४०
पीत्वा कषायान् पयसा भुञ्जीत पयसैव च
कषाययोगैरेभिर्वा विपक्वं पाययेद्घृतम् ४१
समूलमस्तकं क्षुण्णं वृषमष्टगुणेऽम्भसि
पक्त्वाऽष्टांशावशेषेण घृतं तेन विपाचयेत् ४२

तत्पुष्पगर्भं तच्छीतं सक्षौद्रं पित्तशोणितम्
पित्तगुल्मज्वरश्वासकास हृद्रोगकामलाः ४३
तिमिरभ्रमवीसर्प स्वरसादांश्च नाशयेत्
पलाशवृन्तस्वरसे तद्गर्भं च घृतं पचेत् ४४
सक्षौद्रं तच्च रक्तघ्नं तथैव त्रायमाणया
रक्ते सपिच्छे सकफे ग्रथिते कण्ठमार्गगे ४५
लिह्यान्माक्षिकसर्पिर्भ्यां क्षारमुत्पलनालजम्
पृथक्पृथक् तथाऽम्भोजरेणुश्यामामधूकजम् ४६
गुदागमे विशेषेण शोणिते बस्तिरिष्यते
घ्राणगे रुधिरे शुद्धे नावनं चानुषेचयेत् ४७
कषाययोगान् पूर्वोक्तान् क्षीरेक्ष्वादिरसाप्लुतान्
क्षीरादीन्ससितांस्तोयं केवलं वा जलं हितम् ४८
रसो दाडिमपुष्पाणामाम्रास्थ्नः शाड्वलस्य वा
कल्पयेच्छीतवर्गं च प्रदेहाभ्यञ्जनादिषु ४९
यच्च पित्तज्वरे प्रोक्तं बहिरन्तश्च भेषजम्
रक्तपित्ते हितं तच्च क्षतक्षीणे हितं च यत् ५०

इति श्रीवैद्यपतिसिंहगुप्तसूनुश्रीमद्वाग्भटविरचितायामष्टाङ्गहृदयसंहितायां चतुर्थे
चिकित्सितस्थाने रक्तपित्तचिकित्सितं नाम द्वितीयोऽध्यायः २

## तृतीयोऽध्यायः

अथातः कासचिकित्सितं व्याख्यास्यामः
इति ह स्माहुरात्रेयादयो महर्षयः
केवलानिलजं कासं स्नेहैरादावुपाचरेत्
वातघ्नसिद्धैः स्निग्धैश्च पेयायूषरसादिभिः १
लेहैर्धूमैस्तथाऽभ्यङ्गस्वेद सेकावगाहनैः
बस्तिभिर्बद्धविड्वातं सपित्तं तूर्ध्वभक्तिकैः २
घृतैः क्षीरैश्च सकफं जयेत्स्नेहविरेचनैः
गुडूचीकण्टकारीभ्यां पृथक्त्रिंशत्पलाद्रसे ३
प्रस्थः सिद्धो घृताद्वातकासनुद्वह्निदीपनः

क्षाररास्नावचाहिङ्गुपाठायष्ट्याह्वधान्यकैः ४
द्विशाणैः सर्पिषः प्रस्थं पञ्चकोलयुतैः पचेत्
दशमूलस्य निर्यूहे पीतो मण्डानुपायिना ५
स कासश्वासहृत्पार्श्वग्रहणीरोगगुल्मनुत्
द्रोणेऽपा साधयेद्रास्नादशमूलशतावरीः ६
पलोन्मिता द्विकुडवं कुलत्थं बदरं यवम्
तुलार्धं चाजमांसस्य तेन साध्यं घृताढकम् ७
समक्षीरं पलांशैश्च जीवनीयैः समीक्ष्य तत्
प्रयुक्तं वातरोगेषु पाननावनबस्तिभिः ८
पञ्चकासान् शिरःकम्पं योनिवङ्क्षणवेदनाम्
सर्वाङ्गैकाङ्गरोगांश्च सप्लीहोर्ध्वानिलान् जयेत् ९
विदार्यादिगणक्वाथकल्कसिद्धं च कासजित्
अशोकबीजक्षवक जन्तुघ्नाञ्जनपद्मकैः १०
सविडैश्च घृतं सिद्धं तच्चूर्णं वा घृतप्लुतम्
लिह्यात्पयश्चानु पिबेदाजं कासातिपीडितः ११
विडङ्गं नागरं रास्ना पिप्पली हिङ्गु सैन्धवम्
भार्गी क्षारश्च तच्चूर्णं पिबेद्वा घृतमात्रया १२
सकफेऽनिलजे कासे श्वासहिध्माहताग्निषु
दुरालभां शृङ्गबेरं शठीं द्राक्षां सितोपलाम् १३
लिह्यात्कर्कटशृङ्गीं च कासे तैलेन वातजे
दुस्पर्शां पिप्पलद्यं मुस्तां भार्गीं कर्कटकीं शठीम् १४
पुराणगुडतैलाभ्यां चूर्णितान्यवलेहयेत्
तद्वत्सकृष्णां शुण्ठीं च सभार्गी तद्वदेव च १५
पिबेच्च कृष्णां कोष्णेन सलिलेनससैन्धवान्
मस्तुना ससितां शुण्ठीं दध्ना वा कणरेणुकाम् १६
पिबेद्बदरमज्ज्ञो वा मदिरादधिमस्तुभिः
अथवा पिप्पलीकल्कं घृतभृष्टं ससैन्धवम् १७
कासी सपीनसो धूमं स्नैहिकं विधिना पिबेत्
हिध्माश्वासोक्तधूमांश्च क्षीरमांसरसाशनः १८
ग्राम्यानूपौदकैः शालियवगोधूमषष्टिकान्

रसैर्माषात्मगुप्तानां यूषैर्वा भोजयेद्धितान् १९
यवानीपिप्पली बिल्वमध्यनागरचित्रकैः
रास्नाजाजीपृथक्पर्णीपलाश शठिपौष्करैः २०
सिद्धां स्निग्धाम्ललवणां पेयामनिलजे पिबेत्
कटिहृत्पार्श्वकोष्ठार्तिश्वासहिध्माप्रणाशनीम् २१
दशमूलरसे तद्वत् पञ्चकोलगुडान्विताम्
पिबेत्पेयां समतिलां क्षैरेयीं वा ससैन्धवाम् २२
मात्स्यकौक्कुटवाराहैर्मांसैर्वा साज्यसैन्धवाम्
वास्तुको वायसीशाकं कासघ्नः सुनिषण्णकः २३
कण्टकार्याः फलं पत्रं बालं शुष्कं च मूलकम्
स्नेहास्तैलादयो भक्ष्याः क्षीरेक्षुरसगौडिकाः २४
दधिमस्त्वारनालाम्लफलाम्बुमदिराः पिबेत्
पित्तकासे तु सकफे वमनं सर्पिषा हितम् २५
तथा मदनकाश्मर्यमधुकक्वथितैर्जलैः
फलयष्ट्याह्वकल्कैर्वा विदारीक्षुरसाप्लुतैः २६
पित्तकासे तनुकफे त्रिवृतां मधुरैर्युताम्
युञ्ज्याद्विरेकाय युतां घनश्लेष्मणि तिक्तकैः २७
हृतदोषो हिमं स्वादु स्निग्धं संसर्जनं भजेत्
घने कफे तु शिशिरं रूक्षं तिक्तोपसंहितम् २८
लेहः पैत्ते सिताधात्रीक्षौद्रद्राक्षाहिमोत्पलैः
सकफे साब्दमरिचः सघृतः सानिले हितः २९
मृद्वीकार्धशतं त्रिंशत्पिप्पल्यः शर्करापलम्
लेहयेन्मधुना गोर्वा क्षीरपस्य शकृद्रसम् ३०
त्वगेलाव्योषमृद्वीका पिप्पलीमूलपौष्करैः
लाजमुस्ताशठीरास्ना धात्रीफलबिभीतकैः ३१
शर्कराक्षौद्रसर्पिर्भिर्लेहो हृद्रोगकासहा
मधुरैर्जाङ्गलरसै र्यवश्यामाककोद्रवाः ३२
मुद्गादियूषैः शाकैश्च तिक्तकैर्मात्रया हिताः
घनश्लेष्मणि लेहाश्च तिक्तका मधुसंयुताः ३३
शालयः स्युस्तनुकफे षष्टिकाश्च रसादिभिः

शर्कराम्भोऽनुपानार्थं द्राक्षेक्षुस्वरसाः पयः ३४
काकोलीबृहतीमेदाद्वयैः सवृषनागरैः
पित्तकासे रसक्षीरपेयायूषान् प्रकल्पयेत् ३५
द्राक्षां कणां पञ्चमूलं तृणाख्यं च पचेज्जले
तेन क्षीरं शृतं शीतं पिबेत्समधुशर्करम् ३६
साधितां तेन पेयां वा सुशीतां मधुनाऽन्विताम्
शठीह्रीबेरबृहतीशर्कराविश्वभेषजम् ३७
पिष्ट्वा रसं पिबेत्पूतं वस्त्रेण घृतमूर्च्छितम्
मेदां विदारीं काकोलद्यं स्वयंगुप्ताफलं बलाम् ३८
शर्करां जीवकं मुद्गमाषपर्ण्यौ दुरालभाम्
कल्कीकृत्य पचेत्सर्पिः क्षीरेणाष्टगुणेन तत् ३९
पानभोजनलेहेषु प्रयुक्तं पित्तकासजित्
लिह्याद्वा चूर्णमेतेषां कषायमथवा पिबेत् ४०
कफकासी पिबेदादौ सुरकाष्ठात् प्रदीपितात्
स्नेहं परिस्रुतं व्योषयवक्षारावचूर्णितम् ४१
स्निग्धं विरेचयेदूर्ध्वमधो मूर्ध्नि च युक्तितः
तीक्ष्णैर्विरेकैर्बलिनं संसर्गी चास्य योजयेत् ४२
यवमुद्गकुलत्थान्नैरुष्णरूक्षैः कटूत्कटैः
कासमर्दकवार्ताकव्याघ्रीक्षारकणान्वितैः ४३
धान्वबैलरसैः स्नेहैस्तिलसर्षपनिम्बजैः
दशमूलाम्बु घर्माम्बु मद्यं मध्वम्बु वा पिबेत् ४४
मूलैः पौष्करशम्याकपटोलैः संस्थितं निशाम्
पिबेद्वारि सहक्षौद्रं कालेष्वन्नस्य वा त्रिषु ४५
पिप्पली पिप्पलीमूलं शृङ्गबेरं बिभीतकम्
शिखिकुक्कुटपिच्छानां मषी क्षारो यवोद्भवः ४६
विशाला पिप्पलीमूलं त्रिवृता च मधुद्रवाः
कफकासहरा लेहास्त्रयः श्लोकार्धयोजिताः ४७
मधुना मरिचं लिह्यान्मधुनैव च जोङ्गकम्
पृथग्रसांश्च मधुना व्याघ्रीवार्ताकभृङ्गजान् ४८
कासघ्नस्याश्वशकृतः सुरसस्यासितस्य च

देवदारुशठीरास्नाकर्कटाख्यादुरालभाः ४९
पिप्पली नागरं मुस्तं पथ्या धात्री सितोपला
लाजाः सितोपला सर्पिः शृङ्गी धात्रीफलोद्भवा ५०
मधुतैलयुता लेहास्त्रयो वातानुगे कफे
द्वे पले दाडिमादष्टौ गुडाद्व्योषात्पलत्रयम् ५१
रोचनं दीपनं स्वर्यं पीनसश्वासकासजित्
गुडक्षारोषणकणादाडिमं श्वासकासजित् ५२
क्रमात्पलद्वयार्धाक्ष कर्षार्धाक्षपलोन्मितम्
पिबेज्ज्वरोक्तं पथ्यादि सशृङ्गीकं च पाचनम् ५३
अथवा दीप्यकत्रिवृद्विशालाघनपौष्करम्
सकणं क्वथितं मूत्रे कफकासी जलेऽपि वा ५४
तैलभृष्टं च वैदेहीकल्काक्षं ससितोपलम्
पाययेत्कफकासघ्नं कुलत्थसलिलाप्लुतम् ५५
दशमूलाढके प्रस्थं घृतस्याक्षसमैः पचेत्
पुष्कराह्वशठीबिल्वसुरसाव्योषहिङ्गुभिः ५६
पेयानुपानं तत्सर्ववातश्लेष्मामयापहम्
निर्गुण्डीपत्रनिर्यासससाधितं कासजिद्घृतम् ५७
घृतं रसे विडङ्गानां व्योषगर्भं च साधितम् ५७-२
पुनर्नवशिवाटिका सरलकासमर्दामृता
पटोलबृहतीफणिज्जकरसैः पयःसंयुतैः
घृतं त्रिकटुना च सिद्धमुपयुज्य सञ्जायते
नकासविषमज्वरक्षय गुदाङ्कुरेभ्यो भयम् ५८
समूलफलपत्रायाः कण्टकार्या रसाढके ५९
घृतप्रस्थं वलाव्योषविडङ्गशठिदाडिमैः
सौवर्चलयवक्षार मूलामलकपौष्करैः ६०
वृश्चीवबृहतीपथ्यायवानी चित्रकर्धिभिः
मृद्वीकाचव्यवर्षाभूदुरालम्भाम्लवेतसैः ६१
शृङ्गीतामलकीभार्गीरास्नागोक्षुरकैः पचेत्
कल्कैस्तत्सर्वकासेषु श्वासहिध्मासु चेष्यते ६२
कण्टकारीघृतं चैतत्कफव्याधिविनाशनम्

पचेद्व्याघ्रीतुलां ज्ञुरणां वहेऽपामाढकस्थिते ६३
ज्ञिपेत् पूते तु सञ्चूर्ण्य व्योषरास्नामृताग्निकान्
शृङ्गीभार्गीघनग्रन्थिधन्वयासान् पलार्धकान् ६४
सर्पिषः षोडशपलं चत्वारिंशत्पलानि च
मत्स्यण्डिकायाः शुद्धायाः पुनश्च तदधिश्रयेत् ६५
दर्वीलेपिनि शीते च पृथक् द्विकुडवं ज्ञिपेत्
पिप्पलीनां तवज्ञीर्या माज्ञिकस्यानवस्य च ६६
लेहोऽय गुल्महृद्रोगदुर्नामश्वासकासजित्
शमनं च पिबेद्धूमं शोधनं बहले कफे ६७
मनःशिलालमधुक मांसीमुस्तेङ्गुदीत्वचः
धूमं कासघ्नविधिना पीत्वा ज्ञीरं पिबेदनु ६८
निष्ठ्यूतान्ते गुडयुतं कोष्णं धूमो निहन्ति सः
वातश्लेष्मोत्तरान् कासानचिरेण चिरन्तनान् ६९
तमकः कफकासे तु स्याच्चेत्पित्तानुबन्धजः
पित्तकासक्रियां तत्र यथावस्थं प्रयोजयेत् ७०
कफानुबन्धे पवने कुर्यात्कफहरां क्रियाम्
पित्तानुबन्धयोर्वातकफयोः पित्तनाशिनीम् ७१
वातश्लेष्मात्मके शुष्के स्निग्धमार्द्रे विरूज्ञणम्
कासे कर्म सपित्ते तु कफजे तिक्तसंयुतम् ७२
उरस्यन्तःज्ञते सद्यो लाज्ञां ज्ञौद्रयुतां पिबेत्
ज्ञीरेण शालीन् जीर्णेऽद्यात्ज्ञीरेणैव सशर्करान् ७३
पार्श्वबस्तिसरुक्चाल्पपित्ताग्निस्तां सुरायुताम्
भिन्नविट्कः समुस्तातिविषापाठां सवत्सकाम् ७४
लाज्ञां सर्पिर्मधूच्छिष्टं जीवनीयं गणं सिताम्
त्वक्क्षीरीं समितं ज्ञीरे पक्त्वा दीप्तानलः पिबेत् ७५
इज्ञ्वारिकाबिस ग्रन्थिपद्मकेसरचन्दनैः
शृतं पयो मधुयुतं सन्धानार्थं पिबेत्ज्ञती ७६
यवानां चूर्णमामानां ज्ञीरे सिद्धं घृतान्वितम्
ज्वरदाहे सिताज्ञौद्रसक्तून्वा पयसा पिबेत् ७७
कासवांस्तु पिबेत्सर्पिर्मधुरौषधसाधितम्

